अनया विद्रुमस्तम्भभङ्गपिङ्गलया दृशा ।
इतः पल्वलपङ्कान्तर्व्यक्तिमभ्येति सैरिभ ॥ ६४ ॥

कठोरातपतप्तस्य राजहंसस्य सम्प्रति ।
नरेन्द्र नलिनीपत्रमातपत्रीभवत्यद ॥ ६५ ॥

मुखमभ्ररजश्छन्नकपोलफलकद्युति ।
देव दन्तुरयन्त्येते तवापि स्वेदबिन्दव ॥ ६६ ॥

तदत्र कुसुमस्मेरे नि स्वनत्समदालिनि ।
विनीयतां लताकुञ्जे त्वयैष मृगयाश्रम ॥ ६७ ॥

अपि स्वच्छजला देवं कलहंसाङ्कसैकता ॥
वराहोत्खातमुस्तेय पुरः पुष्करिणी तव ॥ ६८ ॥

त्वामिवार्ककरक्रान्तमाकारयितुमेतया ।
अयमाधूतकह्लारकलिकं प्रेषितोऽनिल ॥ ६९ ॥

लतापुष्पोत्करै कीर्णो मार्गोऽयमवगाह्यताम् ।
इतो वन्येभमुक्ताभिरिभिः शर्करिला भुव ॥ ७० ॥

---

१ K reads °प्रक्षय° for °स्तम्ब° २ Tr reads महा° for इतः ३ Tr reads आतपत्र for आतपत्री° wh le B substitutes °भविष्यति for °भवत्यद ४ B reads मुखं मधुरजश्छन्न° and Tr जम्बुमहारिजश्छन्न° for मुखमभ्ररजश्छन्न° but it does not give any g od mean ng wh le T substit ites °चिह्न° for °छन्न° and °उल्लक° for °फलक° ५ K reads भङ्गुरयन्ति for दन्तुरयन्ति ६ Tr and h read °विद्रुव for °बिन्दव ७ B reads त्वाऽत्र for तदत्र wh le K कुसुमस्मेरे नि स्वनम्° f r कुसुमस्मेरे नि स्वनत्° ८ K reads एष for एष and corrects in the margin त्वया कि ९ K rea ls अयि and T अति° f r अपि १० h rea ls भाति for तव ११ I reads °सौरता for °सैकता but it seems to be incorrect १२ I rea ls वराहोत्तान् for वराहोत्खात° १३ K reads दिव्या° for पुरः and न जिन् for तव १४ I reads त्वामिव for त्वामिव १५ Tr and h read °यमक for °कलिक wh le T substitutes उद्भूत° for आधूत° १६ Tr rea ls शर्करिता for मलिनी १७ K reads °पुष्पाक्रमे for °पुष्पोत्करै १८ Tr reads °मुक्ताभि° for °मुक्ताभि° १९ K reads शर्करिता for शर्करिला

इत्युक्ते मसृणं तेन नृपस्य पदमादधे ।
स्मितं सरस्वतीरत्नपर्यङ्के दन्तवाससि ॥ ७१ ॥
यशोभटोपदिष्टेन गत्वा किञ्चिद्विवाध्वना ।
प्राप पुष्करिणीतीरमवन्तितिलको ऽथ सः ॥ ७२ ॥
करादनुचरस्तस्य सान्द्रस्वेदजलाङ्गुलेः ।
मधुर्मनोभवस्येव सशरं चापमाददे ॥ ७३ ॥

अथ स्नानादिवर्णनम् ।

ततः स्नानेच्छया स्पृष्टो विसृष्टश्यामकञ्चुकः ।
स रेजे मेघनिर्मुक्तः पर्यास इव चन्द्रमाः ॥ ७४ ॥
प्रमृष्टमृगयारेणु तन्मुखं पार्श्ववर्तिना ।
रुरुचे मारुतोत्क्षिप्तपरागमिव पङ्कजम् ॥ ७५ ॥
निसर्गललिता तस्य विमुक्तालङ्कृतिस्तनुः ।
लतेव पारिजातस्य पर्यस्तस्तबकाऽभवत् ॥ ७६ ॥
स्वेदभिन्नाङ्गरागः स सरसीं तामगाहत ।
मेदसिक्तत्तटाघातधूलिर्वन्य इव द्विपः ॥ ७७ ॥

---

१ I. reads नृपेन for नृपस्य २ B and I read °सत्यपर्यङ्के, K °सुतपर्यङ्के and Tr °सुते पर्यङ्के all for °रत्नपर्यङ्के ३ B reads रमाङ्गदोप for यशोभटोप°. ४ K. reads प्रापत् for प्राप ५. Tr reads अवनीतिलको for अवन्तितिलको. ६ K reads चिरात् for करात्, while T वनचर for अनुचर ७. Tr reads °कञ्चक for °कञ्चुक ८ I am unable to find out the correct reading of I here. It reads सारोजन्मेघनिर्मुक्त then again corrects सरजन्मेघविनिर्मुक्त, but this and correction seem to be incorrect ९ T. reads पर्यन्त for पर्यास १० K reads पूरण for चन्द्रमा ११ K reads मारुतोद्धूत°, Tr मन्दाक्षिप्त° and I मरुताक्षिप्त° all for मारुतोत्क्षिप्त° १२ T reads पर्यन्त° for पर्यस्त°, while Tr. व्यभात for ऽभवत् १३ Tr reads प्रस्वेदभिन्नाङ्गरजास for स्वेदभिन्नाङ्गराग स. १४ K. reads this stanza as follows —

स्वेदलुप्ताङ्गवर्णस्य सरसीमवगाहत ।
वन्यस्यवाभवत्तस्य श्री पर्यन्तविसर्पिणी ॥.

१५ T. reads उदसिक्त° for मदसिक्त°

स तस्यां दूरविक्षिप्तविहगश्रेणिमेखलः ।
विजहार यथाकामं विलासकुसुमायुधः ॥ ७८ ॥
उवाह विस्फुरन्नालकण्टकच्छद्मनापि सा ।
तदङ्गयष्टिस्पर्शेन रोमाञ्चमिव पद्मिनी ॥ ७९ ॥
ततस्तरङ्गनिर्धौतमध्यास्य स शिलातलम् ।
यशःस्नपितदिक्सीमा देवः सस्नौ यथाविधि ॥ ८० ॥
तस्यां अविरलमत्तालिनिःस्वनच्छद्मना वने ।
अगीयतेव देवस्य लताभिः स्नानमङ्गलम् ॥ ८१ ॥
स दूरोदस्तपर्यस्तसपुष्पसलिलाञ्जलिः ।
जगत्तमोपहं ज्योतिस्त्रयीमयमुपस्थितः ॥ ८२ ॥
तमानर्च स राजेन्दुर्मौलौ यस्येन्दुलेखया ।
क्रियते स्वर्धुनीबालमृणालशकलभ्रमः ॥ ८३ ॥
धन्या हि तौ वनलता यत्फलान्याजहार सः ।
कार्यतः सदृशी तासां समुद्ररशना मही ॥ ८४ ॥
निपीय निखिलव्यक्तराजचिह्नेन पाणिना ।
उपास्पृशत्स चाम्भोजकिञ्जल्ककपिशं पयः ॥ ८५ ॥

---

१. T. and I. read दूरनिक्षिप्त° for दूरविक्षिप्त° and Tr. reads प्रयत्नाक्षिप्त° for the same. It gives another reading त्वरया क्षिप्त°, while T. substitutes तस्या for तस्यां. २ K. reads °श्रोणि° for °श्रेणि°. ३ I. reads विलसन्° for विस्फुरन्°, while B. reads this line, thus—

उवाह निबिडं नालकण्टकच्छद्मनाऽथ सा ।

४. B. reads तदङ्ग° for तदङ्ग°. ५. I. and K. read तदङ्गु° for तदङ्ग°. ६. I. reads °सीमन° for °स्नपित°; while Tr. °देशोऽय for °दिक्सीमा and mutilates two letters next. ७. T. reads यथाविधं for यथाविधि ८. B. reads तस्यां विरल° for तस्यां ऽविरल°. ९ K. reads °कौतुकम् for °मङ्गलम्. १०. Tr. reads अदूरां° for स दूरो°, while K. reads दूरागत° for दूरोदस्त°. ११ K. reads उपास्थितः and T. Tr. and I. read उपास्थित for उपस्थित. १२ Tr. reads स्म for स. १३. Tr. reads तस्य for तासां. १४. B. reads उपस्पृशन् for उपास्पृशत्

नीलोत्पलपत्रमित्रेण पत्रेणाम्बुजिनीभुवा ।
निवारितोष्ण सश्रीकं लताकुञ्जं जगाम सः ॥ ८६ ॥
सपरागे विशश्राम कुसुमप्रस्तरे च सः ।
लक्ष्मीकुचाङ्गरागेण भिन्ने शेषे इवाच्युतः ॥ ८७ ॥
रमाङ्कदोऽपि निर्वर्त्य त्वरया किंञ्चिदाह्निकम् ।
अवाप्तसेवावसरः पर्युपास्त विशाम्पतिम् ॥ ८८ ॥
स भृङ्गध्वनिना सुप्तो विपञ्चीनादबन्धुना ।
तमालपल्लवैस्तेन किञ्चित्किञ्चिदवीज्यत ॥ ८९ ॥
निद्रागृहीतनिर्मुक्तलोचनोऽर्थं जहार सः ।
घनच्छायावृतव्यक्तभास्वतो नभसः श्रियम् ॥ ९० ॥
पीनांसतटसंश्लिष्टपुष्पकेसरशोभिना ।
उपःसाकल्पकेनेव शयनीयममुच्यत ॥ ९१ ॥

पुनर्मृगयाविहारः ।

चकार च पदं चित्रः स मृगस्तस्य चेतसि ।
लग्नं हि किमपि क्वापि कृच्छ्रादाकृष्यते मनः ॥ ९२ ॥

---

१ B reads लीला° for नीला°  २ K Tr T and I read अम्भोजिनीभुवा for अम्बुजिनीभुवा  ३ I reads °गुञ्ज for °कुञ्ज while Tr reads वारितात्पाशु सश्रीको and T वारितोष्णोपक श्रीमत् for निवारितोष्ण सश्रीकं  ४ Tr gives another reading ऽथ for च while B substitutes ऽपि for the same  ५ B and K read भिन्नदेव for भिन्ने शेष  ६ T reads निरयत्वात for निर्वर्त्य  ७ K reads किञ्चिदात्मन for किञ्चिदाह्निकम  ८ T reads तुप्त for सुप्त, while B सुप्तविपञ्ची° for सुप्तो विपञ्ची°  ९ Tr reads उप° for उद  १० B reads घनच्छायावृतव्यक्ततारस्य T घनच्छायाभृतव्यक्त तारस्य and K and Tr घनच्छायावृतव्यक्ततारस्य all for घनच्छायावृतव्यक्तभास्वतो  ११ B T Tr and I read °सन्दष्ट° for °शोभि°  १२ Tr reads केसराकल्पकेनेव for उप सा कल्पकेनेव and B K and T read तेन for उप°  १३ T reads मनु for मन through mistake

स तस्यां दूरविक्षिप्तविहगश्रेणिमेखलः ।
विजहार यथाकामं विलासकुसुमायुधः ॥ ७८ ॥
उवाह विस्फुरन्नालकण्टकच्छद्मनापि सा ।
तदङ्गयष्टिस्पर्शेन रोमाञ्चमिव पद्मिनी ॥ ७९ ॥
ततस्तरङ्गनिर्धौतमध्यास्य स शिलातलम् ।
यशःस्नपितदिक्सीमा देवः सस्नौ यथाविधि ॥ ८० ॥
तस्यां अविरलमत्तालिनिःस्वनच्छद्मना वने ।
अगीयतेव देवस्य लताभिः स्नानमङ्गलम् ॥ ८१ ॥
स दूरोदस्तपर्यस्तसपुष्पसलिलाञ्जलिः ।
जगत्तमोपहं ज्योतिस्त्रयीमयमुपस्थितः ॥ ८२ ॥
तमानर्च स राजेन्दुर्मौलौ यस्येन्दुलेखया ।
क्रियते स्वर्धुनीबालमृणालशकलभ्रमः ॥ ८३ ॥
धन्या हि तौ वनलता यत्फलान्याजहार सः ।
कार्यतः सदृशी तासां समुद्ररशना मही ॥ ८४ ॥
निपीय निखिलव्यक्तराजचिह्नेन पाणिना ।
उर्वीस्पृशास्त्र चाम्भोजकिञ्जल्ककपिशं पयः ॥ ८५ ॥

---

१. T. and I. read दूरनिक्षिप्त° for दूरविक्षिप्त° and Tr. reads प्रतानाक्षिप्त° for the same. It gives another reading रभसा क्षिप्त°, while T substitutes सरसा for तस्यां. २ K. reads °श्रेणि° for °श्रेणि°. ३ I. reads स्फुरत्° for विस्फुरन्°, while B. reads this line, thus—

उवाह निबिडं नालकण्टकच्छलतोऽथ सा ।

४ B. reads तदङ्ग° for तदङ्ग°. ५. I. and K. read तदङ्गु° for तदङ्ग°. ६. I. reads °र्धावित° for °स्नपित°; while Tr. °देहोऽय for °दिक्सीमा and mutilates two letters next. ७. T. reads यथाविधं for यथाविधि. ८. B. reads तस्यां विरल° for तस्या अविरल°. ९. K. reads °कौतुकम् for °मङ्गलम्. १०. Tr. reads सदूरो° for स दूरो°, while K. reads दूरात्तस्त° for दूरोदस्त°. ११. K. reads उपस्थितम् and T. Tr. and I. read उपस्थितम् for उपस्थितः. १२ Tr. reads ता for तौ. १३. Tr. reads तस्य for तासां. १४ B reads उर्वीस्पृशस्त्र for उर्वीस्पृशास्त्र.

नीलोत्पलपत्रमित्रेण पत्रेणाम्बुजिनीभुवा।
निवारितोष्णः सश्रीकं लताकुञ्जं जगाम सः ॥ ८६ ॥

सपरागे विशश्राम कुसुमप्रस्तरे च सः।
लक्ष्मीकुचाङ्करागेण भिन्ने शेषे इवाच्युतः ॥ ८७ ॥

रमाङ्गदोऽपि निर्वर्त्य त्वरया किंचिदाह्निकम्।
अवाप्तसेवावसरः पर्युपास्त विशाम्पतिम् ॥ ८८ ॥

स भृङ्गध्वनिना सुप्तो विपञ्चीनादबन्धुना।
तमालपल्लवैस्तेन किञ्चित्किञ्चिदवीज्यत ॥ ८९ ॥

निद्रागृहीतनिर्मुक्तलोचनोऽर्थं जहार सः।
घनच्छायावृतव्यक्तभास्वतो नभसः श्रियम् ॥ ९० ॥

पीनांसतटसंश्लिष्टपुष्पकेसरशोभिना।
उपःसाकल्पकेनेव शयनीयममुच्यत ॥ ९१ ॥

पुनर्मृगयाविहारः।

चकार च पदं चित्रः स मृगस्तस्य चेतसि।
लग्नं हि किमपि क्वापि कृच्छ्रादाकृष्यते मनः ॥ ९२ ॥

---

१. B reads नीला° for नील°. २. K. Tr. T. and I. read अम्भोजिनीभुवा for अम्बुजिनीभुवा. ३. I. reads °गुञ्ज for °कुञ्ज; while Tr. reads वारितोष्णातु-सश्रीको and T. वारितोष्णीपक श्रीमत् for निवारितोष्ण सश्रीक. ४. Tr. gives another reading ऽथ for च, while B. substitutes ऽपि for the same. ५. B. and K. read भिन्नशेष for भिन्ने शेष. ६. T. reads निरयत्वात for निर्वर्त्य. ७ K. reads किञ्चिशासन for किञ्चिदाह्निकम् ८. T. reads तुष्टो for सुप्तो; while B. सुप्तविपञ्चीं° for सुप्तो विपञ्ची°. ९. Tr. reads ऽग्रं° for ऽर्थ. १०. B. reads घनच्छायवृतव्यक्ततारस्य, T. घनच्छायाभृतव्यक्ततारस्य and K and Tr. घनच्छायावृतव्यक्ततारस्य all for घनच्छायावृतव्यक्तभास्वतो ११. B T. Tr. and I. read °सन्दष्ट° for °संश्लिष्ट°. १२. Tr. reads केसराकल्पकेनेव for उप साकल्पकेनेव and B. K. and T. read तेन for उप.°. १३ T. reads मनु for मनः through mistake.

प्रसादहृद्यालङ्कारैस्तेन मूर्तिरभूष्यत[१] ।
अत्युज्ज्वलैः कवीन्द्रेण कालिदासेन वागिव ॥ ९३

जगाहे स महारण्यमंसासक्तधनुर्लतः ।
उपोढशशभृल्लेखः सायमब्धिमिवार्यमा ॥ ९४ ॥

तस्मिन्कुसुमकिर्मीरतले च विचचार सः ।
स्फुरन्नक्षत्रशबले नभसीव निशाकरः ॥ ९५ ॥

मृगानुगमनिर्बन्धो न जगामास्य मन्दताम् ।
मैथिलीरमणस्येव विपिने पृथिवीपतेः ॥ ९६ ॥

निशातिक्रमणम्।

ततः पपात जलधौ विरोचनफणामणिः ।
दिनाहेर्नीयमानस्य बलात्कारगरुत्मता ॥ ९७ ॥

शनैः शनैरथ व्योम्नि मृगाङ्कः पदमादधे ।
सशङ्क इव भूपालान्मृगयासक्तचेतसः ॥ ९८ ॥

रमाङ्गदास्तृतस्निग्धपल्लवप्रस्तरे ततः ।
वने राजेन्दुना निन्ये तेनेन्दुतिलका निशा ॥ ९९ ॥

---

१. I. reads °वृष्यत for °रभूष्यत ; while T. and Tr. do not insert this whole stanza—

अथ मुखरखगापनीतनिद्रः
क्वचिदपि पद्मसरस्युपास्य सन्ध्याम् ।
पुनरपि तमवेक्षितुं वनान्ते
नृपतिरियेष मृगं मृगेन्द्रकल्पः ॥ १०० ॥

पत्त्रैकेन स्मर इव शरान्पाणिना हेमपुङ्खान्
अन्येनोर्वीविजयि च धनुः साहसाङ्कं दधानः ।
देवः सोऽथ व्यहरदरिषु न्यस्तपादः पिकाली-
नीडन्यञ्चन्निचुलनिचयश्यामलासु स्थलीषु ॥ १०१ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये चित्रमृगावलोकनो नाम द्वितीयः सर्गः ॥ २ ॥

---

१ T. reads °वनांत° for °पनीत°. २ Tr reads च तमीक्षितुं for तमवेक्षितुं, while B and K substitute निशान्ते for वनान्ते ३ Tr reads पत्त्रिणो for पाणिना ४ The letters ऽथ व्यहरदरिषु are mutilated in Tr ५ T. and I. read अरण्यन्यस्तपादः for अरिषु न्यस्तपादः, while T substitutes व्यचरत् for व्यहरत् ६ T reads पिकालि for पिकाली° and नीडन्यञ्च for °नीडन्यञ्चत्° ७ Tr reads °निलय° for °निचय° and K substitutes °श्यामलीषु for °श्यामलासु ८ B and K substitute only द्वितीय सर्ग for these lines, while T Tr and I omit श्री and Tr reads परिमलकृतौ for परिमलापरनाम्न पद्मगुप्तस्य कृतौ, while I substitutes only परिमलस्य for the same and T परिमलापरनाम्ना महाकवे कालिदासस्य कृतौ साहसाङ्कचरिते महाकाव्ये and omits पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते ९ Tr and I omit महाकाव्ये

# अथ तृतीयः सर्गः ।



अथ बहु चरतो ऽस्य चापपाणेर्
चकितचलन्मृगयूथवीक्षितस्य ।
वनभुवि सुलभः परिश्रमो ऽभूत्
न तु हरिणः स हृतेन्द्रचापशोभः ॥ १ ॥

धनुषि तनुभरं निधाय किञ्चित्
तरुणतमालवने विनीतखेदः ।
मृगरुधिरलवाङ्कितेन देव
सम विषमेण पथा पुरं प्रतस्थे ॥ २ ॥

विन्ध्यकन्दरप्रवेशः ।

अथ स चटुलषट्पदोपगीतं
वनगजदानसुगन्धिगन्धवाहम् ।
परिसरमभिनृत्तनीलकण्ठं
न्यविशत विन्ध्यनगेन्द्रकन्दरस्य ॥ ३ ॥

चतुरंकृतकचग्रहः स गच्छन्
वनलतया परिहासलोलयेव ।

---

१ Tr reads °णम्° for °णेर्°, while T °णय for the same, but it seems to be incorrect २ K reads गिरिभुवि सुलभतमः श्रमो ऽभूत् for वनभुवि सुलभः परिश्रमो ऽभूत् ३ T. reads तनुहरम् for तनुभरं ४ I reads °नीत° for विनीत° and T °शमीत° for the same ५ B and K read °लाञ्छितेन for °लवाङ्कितेन. ६ B and Tr substitute पुनः for पुरं. ७ Tr. and K read °पदम्° for °पद° ८ I follow here only B; while K T and I read अव- हीन° for अभिनृत्त° and Tr अभिनीत° for the same ९ K reads °गह्वरस्य for °कन्दरस्य १० K reads °ग्रहः° for °ग्रहः°.

नरपतिरवशः कृतः स कामं
वियति मुखेन्दुमुदञ्चयाञ्चकार ॥ ४ ॥

नमदवनिपतिः पतिः प्रजानाम्
अयि! चपले नु विकृष्यते कचेषु ।
विरम मुहुरितीव मञ्जुमुक्त-
ध्वनिभिरसावलिभिर्लता ऽभ्यधायि ॥ ५ ॥

कतिचिदलिनिपीतधूपगन्धान्
अनतिविलम्बिपरार्ध्यमौलिरत्नान् ।
त्वरितमथ रमाङ्गदो ऽस्य केशान्
विपिनलताविटपान्तरार्चकर्ष ॥ ६ ॥

हंसदर्शनम् ।

नृपतिरथ तदोन्मुखश्चरन्तम्
झटिति सितच्छदमम्बरे ददर्श ।
दधतमधिगतां कुतो ऽपि चञ्च्वा
बिसलतिकामिव तारहारलेखाम् ॥ ७ ॥

---

१ Tr. reads °रवश for °रवश . २. Tr and I. read कृतः प्रकामं and T. कृतः प्रकामं both for कृत स काम ३. T. reads विजयति for वियति, but probably this is a writer's mistake, the letter ज is added more. ४ T. and Tr. read अपि for अयि; while I T. and Tr. read चपले न विकृष्यते and B. चपले वि निकृष्यते for चपले नु विकृष्यते. In Tr. नु appears in the marginal correction. ५. K. reads °गुञ्जदुनिभि for °मुक्तध्वनिभि.. ६. B. and K. read °धूम°, but in the marginal correction of B. there appears °प° for °म°, while T. reads °धूत° for the same ७ B. reads in the margin °विलम्ब्य for °विलम्बि°. ८. B reads निरास for चकर्ष. ९. K. T. Tr. and I. read °रपि for °रथ १०. B T. and I. read तथो° for तदो°. ११. K. reads °मिति for °मिव and substitutes रत्न° for तार°.

विकसितकुमुदेच्छदावदाते
ततनिभृते पतता ततीर्दधानम् ।
विरचयितुमुपायन नृपेन्दोर्
नवघटिते इव दन्तपत्रलेखे ॥ ८ ॥

चितमतनुं विसरता समन्तात्
किरणलतानिकरेण हारयष्टे ।
सितमणिमयसूचिनिर्मितस्य
स्थितामिव जङ्गमपञ्जरस्य मध्ये ॥ ९ ॥

तरलमणिरुचाऽऽवृत भकुरया
विदलितविद्रुमकन्दर्काञ्चितुण्डम् ।
प्रणयनिहितपादयावकाङ्कम्
कमलवनस्थितिलोलयेव लक्ष्म्या ॥ १० ॥

चरणयुगतले विभातकाल-
स्फुटितजपाकुसुमाभिताम्रभासि ।

---

१ B K and T read °कुसुम° for °कुमुद°  Tr also reads the same, but corrects °कुमुद°  २ Tr mutilates two letters and the copyist has inserted in blue ink दिवि and thereby its reading may be दिवि पक्षती for पतता ततीं while K reads ततीर् and T ततिं for ततीं  ३ I and B read युसिन्धार and K and T युसन्धी for नृपन्दार  ४ T Tr and I read °माल for °लख  ५ T reads वितितमतनु for चितमतनु  ६ K reads निर्जल° for जङ्गम°  ७ B and T read सरलमनु च विभस and I सरलमणु च विभत for तरलमणिरुचाऽऽवृतं  ८ B reads °कान्तिकाण्डम K °कान्तिखण्डम् T °कान्तिमण्डम् and Tr °कान्तितुण्डम् all for काञ्चितुण्डम्  ९ T reads °निगित° for °निहित°, while the original reading of Tr is quite difficult to find out  Eight letters are mutilated from प्रणय°, and there are inserted those letters in blue ink निहितपादया धृताङ्क therefore its reading may be निहितपादया धृताङ्कम्  १० K reads °लालयव for °लोलयेव  ११ Tr reads °राम° for °ताम्र° and B K °ऽभिताम्र° for °ऽभिताम्र°

स्वयमिव नलिनीवनप्रसूनैः
परिचयतः कृतकान्तिसंविभागम् ॥ ११ ॥
प्रतिपदमतिदीर्घहारभारात्
अवनमदुन्नमयन्तमुत्तमाङ्गम् ।
शिरसि निपततो निकाममुष्णान्
अहिमरुचः किरणानिवोत्क्षिपन्तम् ॥ १२ ॥
विवृतमुखधृतस्य निष्पतद्भिस्
तरलमणेररुणस्य कान्तिलेशैः ।
अविरतमरविन्दवृन्दपीतान्
मधुपृषतानिव भूयसोद्वमन्तम् ॥ १३ ॥
परिखचितमयत्नपूरिताशैर्
अविरलमौक्तिकदामरश्मिजालैः ।
यश इव परभृता निरुद्ध्य
प्रसभमुपाहृतमात्मनो यशोभिः ॥ १४ ॥
अभिनवबिसशङ्कयाप्यहार्य
स्फटिकमयीमसमक्षमक्षमालाम् ।

---

१ Tr mutilates two letters from °प्र°, while B and K read °प्रसूनैं for °प्रसूनै २ K reads °सन्निपातम for °संविभागम ३ T and I read °वल° for °पृ°, while B gives the same reading in the margin ४ The reading of I is obscure It reads °वनमदुन्नमयमुत्तमाङ्गम् and some letters are struck off ५ B and I read निपतिता for निपततो ६ B Tr and I read °निव नि-पन्तम for °निवोत्क्षिपन्तम ७ L reads तरलमणव कणस्य कान्तिरत्नै for तरल-मणेररुणस्य कान्तिलेशैः, but it seems to be incorrect ८ T mutilates two letters after °रविन्द° ९ T reads भूयसाऽवमन्तम, I भूयसा वमन्तम् B. भूयसाऽवसन्तम but gives marginal correction भूयसा वमन्तम all for भूयसोद्व-मन्तम् १० B K read परिचलित° I परिचारत° and Tr आधकाचित° all for परिखचित° ११ B reads उपाहत°, T Tr and L उपाहित° all for उपाहृत°. १२ I reads °समक्ष° for °मसमक्ष° but probably it may be °मसमक्ष°

विहगमिव विमानहंसपंक्तेर्
विघटितमेकतरं[1] चतुर्मुखस्य ॥ १९ ॥
च्युतमिव सितचामरं मघोनः
श्रमजडवारविलासिनीकराग्रात् ।
अपहृतमिव लोलपत्रजालं[2]
सुरसरितः पवनेन पुण्डरीकम् ॥ २६ ॥
हरहासितसितं[3] दिवापि कान्ति-
स्तवकमिवापतितं सुधाकरस्य[4][5] ।
अपि पतितमिवान्तरिक्षपीलोर्
मघवदिभस्य[6] विलासकर्णशङ्खम् ॥ २७ ॥
कुलकम्[7] ।
स च परिणतलोध्र[8]धूलिशुभ्रस्
तरलमवन्तिपतेश्चकार चेतः ।
किसलयमिव बालचन्दनस्य
स्तिमितगतिर्मलयाचलेन्द्रवातः[9] ॥ २८ ॥
नायकवाक्यम् ।
अवददथ विबुद्धपुण्डरीक-
प्रतिमं[10]मुपान्तचरे[11] निधाय चक्षुः ।

---

१ T. I. and Tr. read एकत्वरं for एकतर. २ B T. I and Tr. read °पत्रमाले for °पत्रजाले ३. I. reads हरहसित हिते for हरहसितसित, but it is incorrect. ४ I. omits—

....कमिवापतितं सुधाकरस्य ।
अपि पतित ............।.

५ Tr. reads निशाकरस्य for सुधाकरस्य ६ B. I. and T. read गवलनिभस्य for मघवदिभस्य, while K. धवलगजस्य for the same. ७. T. does not insert कुलकम् ८. B and I. read °रौध्र° for °लोध्र°. ९. K. reads मलयाद्रिनभवात for मलयाचलेन्द्रवात. १० h. reads °प्रतिभ° for °प्रतिम°. ११ Tr. reads °तले for °चरे.

दधानमणिमयूखभिन्नवर्णां
गिरमिति मालवराजपूर्णचन्द्रः ॥ १९ ॥
सुरभिकुसुमचुम्बिनात्वनम्राम्
अलिपटलेन लतामिमां विना मे ।
खगममुमुपदर्शयेत् क एवं
गगनरमापतिपाञ्चजन्यमन्यः ॥ २० ॥
स्मरवरकरिहस्तशीकराणां
हिमशुचयो नवहारमौक्तिकानाम् ।
विदधति रुचयोऽस्य चञ्चुकोटौ
कवलितबालमृणालसूत्रलीलाम् ॥ २१ ॥
अयि! कथय सितच्छदः क चायं
वनलिनीपुलिनान्तबद्धवासः ।
अवनिपतिकलत्रकण्ठयोग्यः
क च शशिबन्धुरनर्घ एष हारः ॥ २२ ॥
वनभुवि पतितः कुतोऽयमस्यां
कथमयमस्य सुखातिथित्वमानः? ।
गुरुविभवपदस्य कस्य वा स्यात्
अयमिति मे न परिच्छिनत्ति चेतः ॥ २३ ॥

---

१. Tr. reads °कीर्ण° for °भिन्न°. २. K. reads °निम्रा° for °नम्रा°. ३. L. reads क एव कुतात् for क एव. ४. Tr. reads °पाणिपाञ्चजन्यम् for °पाञ्चजन्यमन्यः. ५. B. T. and Tr read स्मरपुर° for स्मरवर° and L. reads स्मरवर°, but corrects स्मरवर.° ६. Tr. reads हिमरुचयो and K. सनरुचयो both for हिमशुचयो. ७. K. reads नव° for वन°. ८. Tr. reads this as follows—

गुरुविभवपरिच्छदस्य कस्यायमिति न मन: परिच्छिनत्ति ॥

९. L reads °नृपस्य for °पदस्य and omits न. १०. T. and L. read मन परिच्छिनत्ति for परिच्छिनत्ति चेत .

अयमुचिततरः फणिस्त्रियो वा
कुचकलशान्तरमर्त्ययोषितो वा ?।
नियतमुदधिमुद्रमीदृशानि
क्षितितलमाभरणानि न स्पृशन्ति ॥ २४ ॥
किमपरमनुगम्य एष हंसः
श्रमजडपक्षतिरावयोर्वनान्ते।
अयि! यदयमवामनस्य भूमिर्
मुखधृतहारलतः कुतूहलस्य ॥ २५ ॥

रमाङ्गदवाक्यम्।

इति विरतवचस्युदीर्य तस्मिन्
कृतिनि नृपे परमारवंशकेतौ।
स्फुरदधरविकीर्णदन्तकान्ति-
प्रसरमिदं जगदे रमाङ्गदेन ॥ २६ ॥
जडरुचिरपि रोचते न कस्मै
कथमपि दीर्घगुणेन लब्धसङ्गः।
नरवर यदनेन हारदाम्ना
तव पतगः स्पृहणीय एष जातेः ॥ २७ ॥

---

१. T. reads 'वर्त्यमर्त्ययोषितो for °मर्त्ययोषितो that is two letters are inserted and B. reads इन्द्रयोषितो for °मर्त्ययोषितो. २. In Tr. the letters यियर्° are placed for अयि य° and after this the two letters are mutilated. ३ K. and Tr. read °कृत° for °धृत°. ४ I. reads स्फुरदधर for स्फुरदधर°. ५ K. and T. read 'विदीर्ण' for 'विकीर्ण', while I substitutes °कान्त° for °कान्ति°. ६ Tr. reads तस्मै for कस्मै ७ B. reads कथमिव for कथमपि. ८. K. and T. read दीर्घगुणेषु and दीर्घगुणाग्र respectively for दीर्घगुणेन, while Tr. mutilates three letters after °गुणे°. ९. K reads हरिवर for नरवर. १०. I. substitutes °धाम्ना for °दाम्ना, but on the head of धा there appears the mark of reading, but does not appear in the margin and it seems thereby it is दा. ११. K. reads वृत्त and Tr. हार both for जात°, but the latter reading does not convey good sense here.

उपवन इव सम्भवः कदाचिन्
नृप घटते विपिनेऽपि हारयष्टेः ।
यदसुर-सुर-नागराजकन्या
इह विहरन्ति नगेन्द्रकन्दरेषु ॥ २८ ॥

शकुनिरथमितो दिगन्तलग्नैर्
अनुपममौक्तिकनिर्गतैर्मयूखैः ।
तव विरचयतीव सूत्रपातं
सुकृतनिधान ! भविष्यतः शुभस्य ॥ २९ ॥

इतमयमनुगम्यतामिदानीम्
अनुगमनेन यतोऽस्य हारलाभः ।
फलमधिकमतोऽपि न कदाचित्
किमपि भवेदयमेव यस्य हेतुः ॥ ३० ॥

तरुविटपलतान्तरेण गच्छन्
भुवमभजन् बहुमुक्तमेघवर्त्मा ।

---

१ K. reads सेम्भृति for सम्भव २ Tr reads अनर° for असुर° ३ K reads हि विन्ध्यकन्दरेषु for नगेन्द्रकन्दरेषु and gives marginal correction °कन्दरासु for °कन्दरेषु ४ I reads अनुगम° for अनुपम° ५ K reads °नि सृतै and T °निर्मलै both for °निर्गतै ६ I. is quite mistaken here, it omits °त्र पात सु° these four letters and corrects in the margin °त्र मदरै (these letters I cannot safely say are well found out), while Tr reads सूत्रजातं and K सूत्रवर्गं for सूत्रपात ७ K T Tr and I read सुकृतमिवात्र for सुकृतनिधान ८ The letter इ° in I seems like श्रु°, but I am unable to make it out ९ B reads नियतो for °न यतो and K reads °न हि हारलाभ एव for °न यतोऽस्य हारलाभ १० I. reads न न for ऽपि नः ११ B reads कमपि for किमपि, but gives marginal reading किमपि १२ B reads तस्य for यस्य but gives marginal reading यस्य while Tr reads राज्य° for the same १३ Except B all read अभजत् for अभजन् १४ K. reads °मेघवीथि for °मेघवर्त्मा

अयमतिगुरुहारभारजाता
श्रमजडतामलमात्मनो व्यनक्ति ॥ २१ ॥
नयनपथमय यथा तवारात्
त्वमपि तथास्य सितच्छदस्य यातं ।
अवनितलमगाङ्क[1] यद्वनान्तग्
चकितमिवायमितस्तत प्रयाति ॥ २२ ॥
निचुलवनमतीत्य वर्ततेऽयम्
पुरत इमामयमब्जिनीमुपेत ।
नवजलधरशङ्कयेव शङ्के
तरुणतमालवनादितो निवृत्त ॥ २३ ॥
किसलयकलिताञ्जलिं त्वरावान्
अयमुपसर्पति नीलसिन्दुवारम् ।
क्षणमयमिह बालचूतमौली
विचकिलमाल्यविलासमादधाति ॥ २४ ॥
अयमभिनवकर्णिकारयष्टि
झटिति धनस्तनकस्तनीमुपैति ।

१ T reads °गुरुभारहार° for °गुरुहारभार° २ B reads अयम and gives marginal reading अपि° for अय but it seems to be incorrect while h अपि चात्मना for अल्मात्मना ३ Tr reads तवागात for तवारात् ४ h reads मन्द for यात ५ K reads इत पुर for इतस्तत and substitutes प्रधावन् for प्रयाति ६ T and I read अतीत for उपेत ७ K reads मन्ये for शङ्के ८ h reads ऽपवृत्त for निवृत्त ९ T reads °कलिकाञ्जलिं for °कलिताञ्जलिं and Tr °खचित गतिस्त्वरावान् for °कलिताञ्जलिं त्वरावान् १० h reads °सिन्दुवारम and I reads °सिन्धुवारम् for °सिन्दुवारम but it seems incorrect ११ I reads °मल्यविमास° for °माल्यविलास°, while T reads विचकिल° for विचकिल° १२ B reads in the margin आवहति for आदधाति १३ I reads °कर्णकार° for °कर्णिकार°, while Tr reads °काञ्चनारयष्टि for °कर्णिकारयष्टि १४ h and T read घन° for धन° १५ h reads उपम for उपैति

अयमतिचपलो निसर्गरेक्तां
स्थलनलिनीमेवधीर्य देव! यातः ॥ ३५ ।
अयमिह हि लतासुपैति कौन्दीं
कुसुमवतीं नवमाधवी विलङ्घ्य ।
क्वणदलिवलयोसु नाऽऽसु तेन
स्खलितमितः सहकारमञ्जरीषु ॥ ३६ ॥
अभिसरति वनस्थलीमिवैताम्
मदनवतीमयमूढकामिलीलः ।
स्फुरदतनुशिलीमुखस्य चाग्रे
विचरति कर्ण इवायमर्जुनस्य ॥ ३७ ॥
श्रममपहरतस्तनूमिवार्तेर्
अयमतिथिर्वनपल्वलस्य जातः ।
तरुतलेषु तिरोहितो ऽयमेता-
स्वयमरविन्दवनादिवोज्झितेति ॥ ३८ ॥
कुरबकवनतः कदम्बराजि
व्रजति ततो मुचकुन्दकाननानि ।

---

१ K reads °रिक्ता for °रक्ता, while I has °रिक्ता, but corrects °रक्ता २ Tr reads अवतीर्य for अवधीर्य, while h substitutes पद्मय for देव ३ T. reads °मालतीं for °माधवीं ४ B reads °वल्यानमेन देव for °वलयासु नाऽऽसु तेन. T सासु नेय and I नाऽऽसु नेय both for नाऽऽसु तेन while in Tr four letters are mutilated, but appear in the correction °नु नादिनेष for °सु नाऽऽसु मेन ५ h. I Tr and T read इह for इव ६ h reads °मित्र चो° for °मयमू°. ७ T reads स्फुरस्तु नु for स्फुरदतनु°. ८ K reads °तै स्वय° for °तैरय° ९ I reads वण° for वन°, while h नवपल्लवस्य for वनपल्वलस्य १० I reads तरुयतातिषु रोहितोऽय° for तरुतलेषु तिरोहितोऽय° ११. B T and I substitute इह for इव १२ I and Tr read मुचुकुन्द° for मुचकुन्द°. B reads the same, but gives च for चु in the margin

इति नगमवगाहते सहारस्
त्वमिव धृतक्रम एष राजहंसः ॥ ३९ ॥

कुरु विजयमितो ममार्पयैतत्
धनुरधुना ससुवर्णपुङ्खबाणम् ।
यदयमितगतिर्गतोऽतिदूरं
जलपतंगः सह नः कुतूहलेन ॥ ४० ॥

हंसानुगमनम् ।

इति कथयति चापमर्पयित्वा
सममिषुभिः स रमाङ्गदे नरेन्द्रः ।
पतगमनु ययौ तमात्तहारं
हरति न कं नववस्तुसम्प्रयोगः ॥ ४१ ॥

ऋजु तमथ विहायसा व्रजन्तम्
रभसवशादनुगच्छतो नृपस्य ।
समजनि भृशमायतोऽस्य पन्थास्
तरुविटपा-ऽवटवर्जनेन वक्रः ॥ ४२ ॥

नृपतिरनुययौ वने विहङ्गं
नृपतिमभि प्रणयी रमाङ्गदोऽपि ।

---

१ T. reads समार for सहार. २ I. and Tr. read धृतक्रम for धृतक्रम. ३ Tr. reads °ञाम्पु for °बाणम्. ४ B. reads °मनिगति, T. °मिह गते, I. °गमित-गतिर् and K. °मनिगमेद् all for °मितगतिर्, while Tr. omits the two letters between °मित and °र्गत. ५ K. °पतन and T. °पतग for °पतगः. ६ K. reads कथयति मनु for समामिषुभि. ७ T. I and Tr. read सह° for सह°, while I. तरविटपावटापत्रुलेन for तरुविटपावटवर्जनेन and Tr. mutilates three letters after °विटपा and substitutes °स्तुनेन, T. reads °विटपावटमपुनेन omitting one letter both for °विटपावटवर्जनेन. ८ B. reads °मति° for °मति.

परिणतबिसकाण्डभङ्गपीतं
पय इव विस्तृतधारमुज्जगार ॥ ४७ ॥

अथ कनकमृणालिकायुगस्य
द्युतिनिचयेन चितं विसर्पताऽधः।
अशिशिरमहसो विसारिणा खे
वलयितमंशुलताकदम्बकेन ॥ ४८ ॥

तटभुवि तमपश्यदापतन्तं
पतिरबने रवतंसितायताक्षः।
सितमभिनवहेमदण्डशोभि
स्फटिकशलाकमिवातपत्रमैन्द्रम् ॥ ४९ ॥

सन्दानितकम्।

सरसि धवलिते ततः समन्ताद्
अमृतमरीचिरुचेव तस्य कान्त्या।
व्यधित बलवती वियोगपीडा
पदमपदे हृदयेषु चक्रनाम्नाम् ॥ ५० ॥

---

१.T. reads विसृतधार° for विस्तृतधार°. २ I. mutilates the letter स्य. ३ B. reads °निचये खचितं and gives marginal reading °निचयैरचित, while K. °निच-यांचित all for °निचयेन चित ४ B and I. read अतितनमहसा for अशिशिरमहसो. T.'s reading may be the same, but it has अ ~ तित° for अशिशिर.° If we conceive that the three letters are mutilated it violates the छन्द (chanda). ५. Tr. reads विसारिणाङ्के for विसारिणा खे, while B. reads विसारिणां for विसारिणा. ६ T. and I. read तटलुठित° for तटभुवि त°, while Tr. तटलुलि-त° for the same. ७. I reads °विलस for °यताक्षः ८. K. reads °पत्रतुल्यम् for °पत्रमैन्द्रम् ९ In T. and Tr. there do not occur this. १०. T. reads रुर for मत. ११. I reads विधत for व्यधित, but it seems to be incorrect.

अतिविततगुणैकधाम्नि तस्मिन्
विधुरमधःपतिते विशुद्धिभाजि ।
कथमपि वसुधाधिपः प्रमोदं
झटिति जगाम गुणिष्वमत्सरो हि ॥ ५१ ॥

अथ नभसि पिशङ्गसान्ध्यराग-
च्छुरित इवाम्बरनिम्नगातरङ्गम् ।
कियदपि सरसस्तटे स गत्वा
कमलरजःकपिशं ददर्श हारम् ॥ ५२ ॥

स च सपदि रसाद्वदोपनीतं
कनकसरोरुहकान्तिना करेण ।
निजयश इव मूर्तमाददे तं
भुवनतलाभयदानदीक्षितेन ॥ ५३ ॥

---

१ Tr. and I read प्रति for अति°, while T. याति विततगुणैरधाम्नि तस्मिन् वि-धर° for अतिविततगुणैकधाम्नि तस्मिन् विधुर°. २ I inserts पति पतिते for पतित. ३. T. and I read विशुद्धभाजि, Tr. विशुद्धिभाजि both for विशुद्धिभाजि ४ Tr reads प्रमोदात for प्रमोदं. ५ K. and I. read झगिति for झटिति. This reading is neither a reading nor incorrect form because this is the style of pronunciation. Northern Indian poets and specially the Kashmirians pronounce झगिति and Southern Indian poets झटिति. ६ B I. and T. read अपि for हि. ७ Tr. reads °च्छुरितमि° for °च्छुरित इ°. ८ T. reads स सरसतटे for सरसस्तटे ९. B reads °जःकपिशे, Tr °ज [illegible] and K. °ज [illegible] all for °जःकपिशं १० T. Tr. and I. read this stanza as follows:—

स च सपदि रसाद्गृहोपनीतं
भुवनतलाभयदानदीक्षितेन ।
निजयश इव मूर्तमाददे तं
कनकसरोरुहकान्तिना करेण ॥.

११ K. reads [illegible] for कनकसरोरुहकान्तिना १२ T. reads भुवनतलाभय° for भुवनतलाभय°, but it seems incorrect

सुजनमिव गुणैरुपोढशोभं
शुचितरबालमृणालसूत्रदीर्घैः ।
अहमहमिकया कृतप्रवेशं
तरणिकरग्लपितैरिवेन्दुपादैः ॥ ५४ ॥

दधतमरुणमङ्गरागशोपं
क्वचिदपि यष्टिषु तारमौक्तिकासु ।
घटितमिव नवातपेन किञ्चिद्
बहुनवया शशलक्ष्मणस्त्विषा च ॥ ५५ ॥

अतिविततरुचिं वहन्तमन्तस्
तरलमणिं तरुणेन्द्रगोपशोभम् ।
अविरलमसकृन्निवासलग्नं
ललितवधूहृदयादिवानुरागम् ॥ ५६ ॥

कतिचिदपि लतान्तरे दधानम्
मृगमदलिप्ततलानि मौक्तिकानि ।
शबलजललवैरिवात्तजन्मा-
न्यमरनदी-यमुनातिथेर्धनस्य ॥ ५७ ॥

---

१ T reads शुभतर° for शुचितर° २ B reads °दीर्घशोभम Tr °सूत्रदीर्घम and T °दीर्घसूत्रम् all for °सूत्रदीर्घैः ३ K reads धृत° for कृत° ४ T reads कश्चित् for किञ्चित् ५ B reads बहुनतया and I बहुरवया (?) both for बहुनवया ६ K reads त्विषैव for त्विषा च and I त्विष च for the same though a mistake ७ B reads तरलमणेस्तरुणेन्द्रगोपशोभाम् for तरलमणिं तरुणेन्द्रगोपशोभम् while T substitutes °कोप° for °गोप°, but probably it is a mistake ८ Here I seems to read °लग्न for °लग्नं and it repeats ललग्न ललितवधूहृदयादिवा° ९ K reads °दिवानुबन्धम् for °दिवानुरागम् १० K. reads पिधानम् (तम ) for दधानम् ११. B reads °यमुनानिधेर्धनस्य and gives in the margin घनस्य for धनस्य Tr reads °यमुनानिधेर्घनस्य and K °यमुनानिधेर्जनस्य all for °यमुनातिथेर्धनस्य

अनुगुणपदवीविनिर्गतासु
प्रतिलतमायतमौक्तिकप्रभासु।
रजनिकरमरीचिसूचिदीर्घैर्
बहुभिरिव ग्रथितं मृणालसूत्रैः॥ ५८॥

अतिदृढमनुरक्तया वितीर्णम्
मुखरमहोदधिमेखलां वहन्त्या।
उरसि निहितबन्धुजीवमुर्व्या
विचकिलमाल्यमिव स्वयंवराय॥ ५९॥

कुलकम्।

अरुचदथ करे स तस्य बिभ्रद्
युवतिरदच्छदकान्तिमध्यरत्नम्।
किमपि मनसिजेन शासनाङ्कः
प्रहितनिजायुधचित्रपुष्पमुद्रः॥ ६०॥

शशिकररुचिना स तेन रेजे
मृदुकरपुष्करवर्तिना नरेन्द्रः।
अमरपुरधुनीसमुद्धृतेन
त्रिदशकरीव मृणालकन्दलेन॥ ६१॥

---

१. K. reads °जाले for °सूत्रै. २ T. reads अतिरिक्तया वितीर्णम् and Tr अनुरक्तया विकीर्णम् both for अनुरक्तया वितीर्णम् ३ Tr reads सप्तभि कुलकम; while T omits it. ४. K. reads °रत्ने for °रत्नम्. ५ I. reads येन सा for °जेन शा°, but the letters ज and श are written in N. Indian writings for य and स respectively. ६ T. and B. read इताहितयोनिपिष्टमुद्र, I इताहितमयी-मपिष्टमुद्र and K. इताहितेन पिष्टमुद्र all for °निजायुधचित्रपुष्पमुद्र, while I. reads सासनाङ्क for शासनाङ्क,. ७. K. reads °सित° for °कर°; while I. °कचिना स° for °रुचिना स. ८ Tr. reads °समुत्रतेन for °समुद्धृतेन, while I. substitutes ध° for °स°. ९. B. reads °पुलिन for °करीव.

उरसि नरपतेः पतंश्चकाशे
कनकशिलाविपुले तदंशुपूरः ।
अखिलभुवनकोशरोजलक्ष्म्या
निहित इवाधिकमुत्कयो कटाक्षः ॥ ६२ ॥

विकृतिरुदधिशुक्तिषु च्युतानां
ध्रुवमियमिन्दुकलासुधालवानाम् ।
जलदजलकणोद्भवेषु काम
निवसति कान्तिरिय न मौक्तिकेषु ॥ ६३ ॥

न किमयमुडुमण्डलापवादः
कुमुदवनानि पुरोऽस्य न त्रपन्ते ।
कथमयमवधिर्न मुक्तिभाजाम्
इति तमवेक्ष्य स चिन्तयाञ्चकार ॥ ६४ ॥

सन्दानितकम् ।

---

१ From the word अखिलभुवनकोश to भरण भवादृशी (Canto IV 44) the intermediate portion i e, 12 stanzas of this Canto and 54 of the fourth is omitted in T this omission must have happened through writer s carelessness २ I and Tr read °राज्यलक्ष्म्या for °राजलक्ष्म्या ३ B reads उत्सया for उत्कया, but gives marginal reading उत्कया ४ I omits the following portion —

मियमिन्दुकलासुधालवानाम् ।
जलदजलकणोद्भवेषु काम
निवसति कान्तिरिय न मौक्तिकेषु ॥ ६३ ॥
न किमयमुडुमण्डलापवाद
कुमुदवनानि . . ।

The correction appears in the margin, but it is not sufficient for the omitted portion ५ B reads °त्वाद्भवेषु for °कणोद्भवेषु ६ B reads पुरो मनु for पुरोऽस्य न ७ Tr and I. read कथमयमवधिरयं न मुक्तिभाजाम for कथमयमवधिर्न मुक्तिभाजाम्, while B substitutes भुक्ति° for मुक्ति°. ८ K. does not insert this

स्फुरदुदरनिवेशिनेन्द्रनीलां
मदजलराजिमिव स्मरद्विपस्य ।
अवनिपतिरपश्यदक्षराणां
ततिमथ हारमृणालिकान्तराले ॥ ६५ ॥

अभिनवलिखितामिव प्रशस्तिं
मदनमहानृपतेः स पार्थिवेन्द्रः ।
इति निबिडकुतूहलाकुलस्तां
ललितपदाभरणामवाचयच्च ॥ ६६ ॥

'मनसिजवरवीरवैजयन्त्याम्
त्रिभुवनदुर्लभविभ्रमैकभूमेः ।
कुचमुकुलविचित्रपत्रवल्ली-
परिचित एष सदा शशिप्रभायाः' ॥ ६७ ॥

किमु विपुलमिमं मनुष्यलोकं
पुरमुत पर्वतपक्षशातनस्य ।
किमु युवतिरियं भुजङ्गभर्तुर्
भुवनमलंकुरुते शशिप्रभेति ॥ ६८ ॥

वदति शशिमुखीमितो न दूरे
तरुणविलेपनभिन्न एष हारः ।

---

१. B and K. read °दुरुविनिवेशि° for °दुरनिवेशि.° २ B and I. read महान्प° for महान्प°. ३ B. reads °न्द्रेण and gives marginal reading °न्द्रे च for °न्द्राने ४ K reads °लिखिताम् for °लिखितां. ५ Tr. reads मति for इति ६ K reads °त्सि° for °कुत°. ७ K reads भवाचयत for भवाचयच्च ८ I and Tr. read °वर° for °वर°, while Tr. mutilates न ९ K. reads °परिचितदर्पण एष मानस्तस्या for परिचित एष सदा शशिप्रभायाः १० K reads विकृतम for विपुलम ११. I. reads °कुरुते°, but corrects °किमन

सरितमिव वनान्तरे समीरैः
स्फुटितसरोरुहरेणुना पिशङ्गः ॥ ६९ ॥
कुसुमशरसखस्य कस्यचित्किं
समजनि नाकतलाधिदेवतेयम् ।
उत मुकुलितमन्मथावतारे
पथि विचरेदधिनाककन्यकानाम् ॥ ७० ॥
अपि कुसनयनोत्सवेन तन्वी
तरुणसुधामधुरेण दर्शनेन ।
मुदमुपजनयेद्वने किमेषा ?
मम शरदिन्दुकलेव कैरवस्य ॥ ७१ ॥
इति कियदपि यावदेव चिन्ता-
वशमगमत्स मनुष्यलोकपालः ।
धनुरपि निचुलं विधाय तावत्
कुसुमशरोऽस्य बभूव पार्श्ववर्ती ॥ ७२ ॥
अथ सम्भ्रमादनुचरेण
विनिहिततमालपल्लवे ।
आस्त तरुकुसुमसंवलिते
सरसः स सैकतशिलातले नृपः ॥ ७३ ॥

---

१. K. reads समीरस्फुटित° for समीर स्फुटित°. २ B. and K read साङ्कुतला° for नाकतला°, while two letters before तला are mutilated in Tr. ३. B reads सत° for उत ४. B Tr. and I. read °वधुनापि कन्यकानाम् for °दधिनाककन्यकानाम्. ५ I. substitutes °पु° for °मु°. ६. K. reads मुहुरुपजनयेन्मुदं for मुदमुपजनयेद्वने. ७. I. substitutes स for श. ८. K. reads निपुणं for निचुलं. ९ Tr. and I. read विषमशरो for कुसुमशरो. १०. T. and I. read कुसुमतरु° for तरुकुसुम°; while B. substitutes सनु° for तरु°. ११. Tr. reads °नैकत° for सैकत°.

आलक्ष्य स्तनसस्य्यलक्ष्मणि ततस्तस्मिन्कुरङ्गीदृशो
[1]मुक्तादाम्नि करोदरप्रणयितामात्ते तुषारत्विषि ।
विस्मृत्या सहसा हृतं चतुरया क्रोडीकृतं चिन्तया
चेतः श्रीनवसाहसाङ्कनृपतेरुत्कण्ठया ऽऽकृष्यत ॥ ७४ ॥

इति श्रीमृगाङ्कगुप्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभाहारलाभो नाम तृतीयः सर्गः ॥ ३ ॥

---

१. I. reads विस्मितया for विस्मृत्या २ B. reads हृतं for हृतं. ३. I reads परिमलस्य नवसाहसाङ्कचरिते हारलाभस्तृतीय सर्गः Tr reads the same, but adds कृतौ after परिमलस्य and नाम after हारलाभो; while B. reads only इति तृतीय सर्गः

# अथ चतुर्थः सर्गः ।



ततः स चेतस्यवनीपतिर्दधे
शशिप्रभालोकमहोत्सवस्पृहाम् ।
उपोढरागामुदधिस्तटोदरे
नवोद्गतां विद्रुमकन्दलीमिव ॥ १ ॥

शशिप्रभाशानलिनीमृणालताम्
उपागते मौक्तिकदाम्नि सादरः ।
तदागते दूत इव न्यवेशयत्
स दर्शितप्रेमलवे विलोचने ॥ २ ॥

पुनः पुनः षट्पदराजिमेचकां
तदिन्द्रनीलाक्षरपङ्क्तिमैक्षत ।
स तत्क्षणान्मन्मथजातवेदसं
तनीयसीं धूमलतामिवोद्गताम् ॥ ३ ॥

सुगन्धिहारादनुलेपनं करे
समुल्लिपत्स्वेदलवे विलुम्पति ।
असङ्गताया अपि दीर्घचक्षुषः
पयोधरस्पर्शमिवाससाद सः ॥ ४ ॥

तदीयनामाङ्कलिपिं शनैः शनैः
सलीलमावर्तयितुं प्रचक्रमे ।

---

१. Tr. reads [illegible] for करेऽसर. २. Tr. reads उपागते for सदागते.
३. K. and Tr. read [illegible] for [illegible]. ४. T. reads [illegible] for [illegible].
५. K. reads [illegible] for विलुम्पति. ६. K. reads °[illegible] for °[illegible]..

परिस्फुरत्पल्लवपाटलाधरो
रहस्यविद्यामिव मन्मथस्य सः ॥ ५ ॥
अनेकरूपोऽल्लिखनप्रगल्भया
मुनीन्द्रगया वर्तिकयेव चिन्तया ।
स तामनालोकनसंस्तवां पुरा
लिलेख चित्ते मुहुरन्यथान्यथा ॥ ६ ॥
अनङ्ग-चण्डातपतप्तयोस्तदा
अभिप्रभाविभ्रमदर्शनस्मृति ।
द्वयोरभूदुत्सुकता वनान्तरे
विलासिनस्तस्य च कैरवस्य च ॥ ७ ॥
उदग्रदिग्वारणहस्तहारिणा
स दक्षिणेन स्फुरता च बाहुना ।
स्थिरीकृताशो मनसापि दुर्लभाम्
अदुर्लभामिन्दुमुखीममन्यत ॥ ८ ॥

---

१ K. reads °पाटलाधरं for °पाटलाधरो. २ Tr. reads °रूपाल्लिखन° for °रूपा ल्लिखन°; while K. substitutes °प्रवीणया for °प्रगल्भया ३. B. reads भवाङ्ग° for अनङ्ग°. ४. B and K. read पुनरन्यथा° for मुहुरन्यथा°. ५ K. reads °दर्शनेन वा for °दर्शनस्मृति ६. I substitutes here also 'दि' for 'द्वि'. This manuscript substitutes here and there व for ब and स for ष, but we neglect it hereafter. ७ K. does not insert the following stanza.—

उदग्रदिग्वारणहस्तहारिणा
स दक्षिणेन स्फुरता च बाहुना ।
स्थिरीकृताशो मनसाऽपि दुर्लभाम्
अदुर्लभामिन्दुमुखीममन्यत ॥ ८ ॥,

only fourth charana appears in the marginal correction. ८. I. reads स्फुरन्ता for स्फुरता, but it seems to be incorrect, while Tr and I. substitute स्य for च. ९. K reads न दुर्लभाम् for अदुर्लभाम् and अमंस्त सः for अम न्यत

पुरो विमुञ्चन्नयने यदृच्छया
नृपस्तमालद्रुमकाननोदरे[1] ।
अपश्यदत्रावसरे[2] विलासिनीं
पयोदमध्ये शशिनः कलामिव ॥ ९ ॥

नायकवाक्यम् ।

अथैष दीर्घा दशनार्चिषः किरन्
मुखामृतांशोः किरणच्छटा इव ।
निरीक्ष्य तामुन्मदहंसगामिनीं
रमाङ्गदं सस्पृहमित्यवोचत्[3] ॥ १० ॥

शनैश्चरन्ती विपिने तव स्थिता
नितम्बिनी कश्चिदियं[4] दृशोः पथि? ।
अधीरतां दक्षिणमातरिश्वना
लतेव नीता मसृणेन माधवी[5] ॥ ११ ॥

युता सिताभैः[6] सुमनोभिरेतया
परिश्लथेयं कबरी नियम्यते[7] ।
उदस्तभास्वत्करकान्तया श्रिया
दिनस्य ताराशबलेव शर्वरी ॥ १२ ॥

असत्कवेर्वागिव वीतसौष्ठव
निवेशयन्ती पदमव्यवस्थया ।
असावनेकस्खलितैः समाकुला[8]
विमुच्य मार्गं किमितः प्रतिष्ठते[9] ॥ १३ ॥

---

१ K reads °वीथिकोदरे for °काननोदरे २ Tr and I read अपश्यत् for अपश्यत ३ K Tr and I read साभिलषम् for सस्पृहम् ४ Tr reads काश्चिदिय and I कश्चिदिय for कश्चिदिय The latter seems to be incorrect ५ K reads °मसृणम माधवीम for मसृणेन माधवी ६ B I and Tr read °सिताभिः for °सिताभैः while K substitutes उता for युता ७ I reads दियम्यत for नियम्यते, but the letter दि may be नि ८ K reads पेशले for समाकुला ९ B and K read किमितःप्रतिष्ठति and Tr किमुत प्रतिष्ठत both for किमितः प्रतिष्ठते

हठेन नेतुं वशतामिवात्मनो
मनोभिरामासु विलासभङ्गिषु ।
धृतांशुका ताभिरियं पदे पदे
लताभिरम्भोजमुखी निरुद्ध्यते ॥ १४ ॥

विचिन्वती किञ्चिदिवेयमादरात्
अपक्ष्मपातास्तिमिते विलोचने ।
गते ऽवतंसोत्पलपत्रबन्धुताम्
इतस्ततः पद्मवने विमुञ्चति ॥ १५ ॥

मृदु प्रयान्तीयमनिम्न-निम्नयोः
सितांशुका कामपि कान्तिमश्नुते ।
जले कलेव प्रतिबिम्बितैन्दवी
वनानिलोदञ्चदवाञ्चदूर्मिणि ॥ १६ ॥

प्रसादमस्माकमरण्यदुर्लभैर्
विधेहि सालक्तकपादताडनैः ।
असावशोकैः क्षणमाश्रितैः श्रमात्
इतीव मत्तालिरुतेन याच्यते ॥ १७ ॥

---

१. I. and Tr. read गुरुता° for वशता°. २. B. reads °भूमिषु for °भङ्गिषु. ३. I. and Tr. read धृतांशुकां for धृतांशुका. ४. K. reads रुद्ध्यते for निरुद्ध्यते. ५. B. and I. read अपक्ष्मपात° for अपक्ष्मपात°. ६. B. K. and I. read पद्मवनेषु मुञ्चति for पद्मवने विमुञ्चति, but B. gives in marginal reading वि° for °षु. ७. I. reads सितांशुका for सितांशुका, but the letter सि may be सि, while Tr. reads सितांशुकाकामपि for सितांशुका कामपि. ८. I. reads °तैन्दरी, but it seems to be incorrect. ९. K. and Tr. read अनन्य° for अरण्य°. In I. the letters रण्य are not clear enough to be read. १०. B. reads °दुर्लभं for °दुर्लभैः. ११. B. reads अशोकः क्षणमाश्रितः for अशोकैः क्षणमाश्रितैः. १२. B. reads °रुतेन याचते for °रुतेन याच्यते.

अभेदमुढैरलकाभिरावृता
लताभिरीषद्धुलितालिपङ्क्तिभिः ।
इयं पुरो मारुतनर्तितालका
न लक्ष्यते व्यक्तमवामनस्तनी ॥ १८ ॥

ऋजु क्वचित्क्वाप्यनृजु प्रवर्तते
क्वचित्स्खलत्युच्चशिलातले पथि ।
इयं शनैः शैलनदीव च क्वचित्
विनम्रवानीरतलेन गच्छति ॥ १९ ॥

स्थिते परिष्वज्य सरोजिनीमिमां
वने घनेऽस्मिन् कुसुमोन्मदालिनि ।
प्रयाति मासृयमिथं कथंचन
स्वहस्तसीमन्तितमार्गवीरुधि ॥ २० ॥

क्वचित्क्वचित्स्वेदलवोद्गमो मुखे
समाहितेयं कबरी यथा तथा ।
अयं च कम्पः कुचयोर्यथेरियं
रतिश्रमव्याकुलितेव लक्ष्यते ॥ २१ ॥

अनेन रूपातिशयेन लीलया
विचित्रनेपथ्यपरिग्रहेण च ।

---

१ Tr. reads °मुग्ध° for °मुढ°. २ I reads °[illegible] and Tr. °[illegible] both for °[illegible]. ३. B. reads °डुलितालिपङ्क्तिभिः and K. °[illegible] for °[illegible]. ४. Tr reads [illegible] for [illegible]. ५ B. reads स्थिते for स्थित. ६ Tr. घने घने ऽस्मिन् for वने घनेऽस्मिन्. ७ K. reads °[illegible] for °[illegible]. ८. K. reads [illegible] for समाहितेयं; while B reads यथा यथा for यथा तथा. ९. K. reads [illegible] for [illegible]. १०. K reads [illegible]° for [illegible] and gives in the margin [illegible]° for the same.

अरण्यसञ्चारपरेयमेकिका
कुतूहलं मे हृदये निषिञ्चति ॥ २२ ॥
असौ पराधीनतयाऽस्पदीकृता
न बालिका न प्रतिभासते मम ।
अयं स्फुरत्काञ्चनपद्मसोदरस्
सचामरोऽस्याः कथमन्यथा करः ॥ २३ ॥
इयं किमु स्याद्वनदेवताऽऽगता
गता धरां व्योमवधूरियं किमु ।
अवेक्षितुं हारमिहेयमागता
फणिप्रभावाम्बरविलासिनी किमु ॥ २४ ॥
इतः स चित्राकृतिरीक्षितो मृगस्
सितच्छदादाममितो विभूषणम् ।
इतश्च दृष्टेयमिति प्रसूयते
प्रसक्तमाश्चर्यमियं वनस्थली ॥ २५ ॥

पाटलाया नायकदर्शनम् ।

इति प्रकृत्या मधुरोक्तिरुक्तवान्
तयाऽऽयताक्ष्या ददृशे विशाम्पतिः ॥
तमालपत्रापिहिते शिलातले
कुमुद्वतीकान्त इवाम्बरे स्थितः ॥ २६ ॥
ततस्तदालोकनकौतुकेन सा
स्थिता निमेषोज्झितपक्ष्मलेक्षणम् ।

---

१. B. reads मनसः प्रयच्छति for हृदये निषिञ्चति. २. K. reads °मेव वै for °मन्यथा. ३. Tr. reads ऽथ वा सुराङ्गना भोगिवधूरियं किमु । for ऽऽगता गता धरां व्योमवधूरियं किमु । ४. K. and Tr. read अपेक्षितुं for अवेक्षितुं. ५. In Tr. वा is mutilated. ६. K. and Tr. read ईक्ष्यते for ईक्षितो. ७. B. reads °यमिव for °यमिति. ८. K. reads मलक्ष्यते for प्रसूयते. ९. K. reads मन्येयमाश्चर्यमनिद् for प्रसक्तमाश्चर्यमियं. १०. K. reads भाम्बरास्थितः for अम्बरे स्थितः.. ११. B. reads निमेषोज्झितपक्ष्मलक्ष्मणा for निमेषोज्झितपक्ष्मलेक्षणम्.

विनिद्रसत्केसरपङ्कजा बभौ
वने निवातस्तिमितेव पद्मिनी ॥ २७ ॥

पाटलायाः स्वगतम् ।

अचिन्तयत्सेति च पाटलाधरः
सितारविन्दच्छददीर्घलोचनः ।
मुखं सुधादीधितिसुन्दरं दधन्
वने गतः को ऽयमनङ्गविभ्रमः ॥ २८ ॥

व्यनक्ति कल्याणमयीयमाकृतिर्
महीयसीमस्य महानुभावताम् ।
असत्यमेतासु रुचा वितन्वती
लतासु कार्तस्वरपल्लवोद्गमम् ॥ २९ ॥

भुजेन चित्राङ्गदरत्नशोभिना
सतारहारेण भुजान्तरेण च ।
वदत्ययं मध्यमलोकपालताम्
परार्ध्यचूडामणिना च मौलिना ॥ ३० ॥

अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सैतेव वीज्यते
विलासवालव्यजनेन को ऽप्ययम् ॥ ३१ ॥

---

१. K. reads °सान्द्रार्द्र° for विनिद्र°. २. Tr. reads स्मिता° for सिता°. ३. K. reads °लोल° for °दीर्घ°. ४. K. reads in the margin °पाण्डुरं for °सुन्दरं. ५ I. and Tr. read °मनङ्गसः प्रति for °मनङ्गविभ्रम. ६. K. and Tr. read महीयसां for महीयसीं°, while I. सहानुभावताम् for महानुभावताम्. ७. K. reads न मूल° for असत्य°. ८. Tr. reads रत्नाङ्गदचित्र° for चित्राङ्गदरत्न°. ९. I. reads °मणिभास्मौलिना for °मणिना च मौलिना. १०. K. reads सदैव for सैतेव and Tr. सहैव for the same.

प्रियेयमारूढगुणा सुवंशभूर्
न चान्तिकं चापलताऽस्य मुञ्चति ।
इमे पृषत्का अपि पार्थिवश्रियो
विलासकर्णोत्पलपल्लवा इव ॥ २२ ॥
इतः शिलोत्सङ्गतले निषेदुषा
दिवश्च्युतेनेव कुरङ्गलक्ष्मणा ।
अधस्तरूणाममुना विनीयते
क्षणं मृगव्योपनतः परिश्रमः ॥ २३ ॥
अयं स न स्यान्नवसाहसाङ्क इ-
त्यनङ्गलीलासु कृती भुवः पतिः ।
स येन मुक्तो निजनामलाञ्छितः
शशिप्रभाकेलिकुरङ्गके शरः ॥ २४ ॥
अयं स नो हार इवास्य दृश्यते
करोदरे पल्लवपाटलत्विषि ।
इतः किमेतस्य न सैकते ऽथ किं
सितच्छदो लोचनगोचरं गतः ॥ २५ ॥
सुवर्णपुङ्खे लिखितं शिलीमुखे
तदस्य नामास्ति समानमाकृतेः ।
यदङ्कतामेकपदे पृषत्कताम्
अगादनङ्गस्य शशिप्रभाम्प्रति ॥ २६ ॥

१ Tr reads अपेयं° for प्रियेयं°. २ Tr reads इव and corrects in the margin इह for अपि ३ K reads नूनं for इन. ४ I reads अनङ्गलील सुकृती and Tr अनङ्गलील सुकृती for अनङ्गलीलासु कृती, while K. अनङ्गलीलासुकृतिषु for the same. ५. Tr. reads अनो for स नो and corrects in the margin स नो. ६ I. and Tr. read ऽनन्तय° for पल्लव°. ७ B. and K. read किमेतस्य for किमेतस्य ८. Tr. reads °न for त. ९ I reads नदस्ति नामाऽस्य and Tr. तदस्य नामास्य both for तदस्य नामास्ति १० Tr reads पृषत्कताम् for पृषत्कताम्, but it seems to be incorrect.

अनेन चेद्योगमुपैति दैवतः
फणीन्द्रकन्या शशिनेव रोहिणी ।
अनल्पलावण्यतिरस्कृतोपमं
वपुस्तदस्याः सफलत्वमेष्यति ॥ ३७ ॥
विधातुमेनामहमेव वा क्षमा
मितोदरीमङ्कनलेऽस्य को विधिः ।
ममेदृशे यद्विषये विमत्सराः
स्तुवन्ति सख्यो मसृणोक्तिसौष्ठवम् ॥ ३८ ॥
सहामुना किञ्चिदुपान्तवर्तिना
वदत्यसावुद्गतदन्तदीधितिः ।
कुतूहलाक्षिप्तनिमेषलास्यया
विलोकयन्मामिव दीर्घया दृशा ॥ ३९ ॥

पाटलाया समीपमागमनम् ।

अथाधिगन्तुं किल तस्य पत्रिणो
गतिं वनान्ते कथमप्यलक्षिताम् ।
तमभ्यगात्सा नृपतिं सचामरा
सरित् सफेना निधिमर्भसामिव ॥ ४० ॥
समुच्चरन्नूपुरसिञ्जितैः पदैर्
यथा यथा सम्मुखमाजगाम सा ।

---

१ K reads [illegible] for रोहिणी २ Tr and I read मिताऽस्या for तदस्याः ३ I and Tr. read °मीयते for °मेष्यति ४ I and Tr read विधातु° for विधातु° ५ B reads क्षम for क्षमा ६ B reads °मेकपदे for °मङ्कन° ७ Tr reads ऽत्र for यत्र ८ K and Tr read मसृणोऽस्ति° for मसृणोक्ति° ९ Tr reads दृशा° for दृशा° १० I reads °दीधिति for °दीधितिः ११ K reads विलोकयन्मामिव- [illegible] for विलोकयन्मामिव while Tr substitutes दृश for दृशा १२ I and Tr read भर्गसां for भर्भसां १३ Tr reads शिञ्जितै for सिञ्जितैः .

तयाऽऽयताक्ष्येव तथात्रयेरितो
दृगस्य पश्चादपसारमाददे ॥ ४१ ॥
शनैस्ततस्तां सविधोपसर्पिणीम्
निरीक्ष्य हारं पिदधे नराधिपः ।
निजोत्तरीयेण सितेन मारुतः
शरद्घनेनेव शशाङ्कमण्डलम् ॥ ४२ ॥
पयोधरोत्सङ्गनिवासलालितं
व्यधादिमं पन्नगराजकन्यका ।
इति प्ररोहद्बहुमानमन्थरो
बभूव तस्मिन्नवनीपुरन्दरः ॥ ४३ ॥
अनल्पलावण्यविलासजन्मभूर्
विचित्ररत्नद्युतिभास्वरोर्मिका ।
तमिद्धमुक्ताभरणं भुवः पतिम्
पयोधिवेलेव सुवेलमाप सा ॥ ४४ ॥
अवाप देवः श्रियमन्तिकस्थया
तया स बालव्यजनाङ्कहस्तया ।
निषेव्यमाणः स्फुटलक्ष्यदेहया
नरेन्द्रलक्ष्म्येव यशःसमेतया ॥ ४५ ॥

---

१ Tr mutilates रि २ B. and K read मृगस्य for दृगस्य ३. K. and Tr. read °माद्धे for °माददे ४. K reads जनाधिप. for नराधिप ५ Tr and I. read मृगाङ्क° for शशाङ्क° ६ K reads प्रगल्भ for प्ररोहत्° ७ I and Tr read °भासुरो° for °भास्वरो° ८ K reads तमित्थ° for तमिद्ध° ९. B reads पयोद° for पयोधि° १० Tr. omits ना through mistake ११ Tr reads स्फुटदेहलक्ष्यया for स्फुटलक्ष्यदेहया १२ K reads °सनाथया for °समेतया

पाटलाकृत सत्कारः।

विभिन्नचूर्णालकभंक्ति कुर्वती
विकीर्णचूडामणिचन्द्रिकं शिरः।
अथानुभावेन निदेशितेव सा
ननाम मानिन्यवशा विशाम्पतिम् ॥ ४६ ॥

दृशा नरेन्द्रेण निदेशिते स्वयं
शिलातले नातिविदूरवर्तिनि।
उपाविशत्सा रशनामणित्विषा
निषिच्यमाने स्मरचापशोभिनि ॥ ४७ ॥

रमाङ्गदवाक्यम्।

तयातिदीर्घैर्दशनानुपातिभिर्
विकृष्यमाणामिव भूषणांशुभिः।
इति क्षितीशेङ्गितवर्त्मदीपिकाम्
उदीरयामास गिरं रमाङ्गदः ॥ ४८ ॥

अनेन विन्ध्याद्रिविहारजन्मना
श्रमेण कामं भवती कदर्थिता।

---

१. B. and K. read °पङ्क्ति for °भक्ति. २ K. reads स्वतोऽनुभावेन निदर्शितेव for अथानुभावेन निदशितेव ३ I omits the following —

.. .. विदूरवर्तिनि।
उपाविशत्सा रशनामणित्विषा
निषिच्यमानेऽमरचापशोभिनि ॥ ४७ ॥
मयातिदीर्घैर्दशनामपातिभि,

but in the marginal correction appears विदूरवर्तिनि। उपाविशत् वेपितनामनस्तनी for the above omitted portion I cannot say that this marginal correction. is exactly the same, while B and Tr read नातिसमीपवर्तिनि for नातिविदूरवर्तिनि ४. Tr reads निषच्यमानामर° for निषिच्यमानऽमर°, while in B it appears in the marginal reading निषेच्यमाने for निषिच्यमाने ५. Tr. reads मयानु° for मयाति° and B दशनाम° for दशनानु° ६ Tr reads °विन्ध्यातपभार° for 'विन्ध्याद्रिविहार°.

प्रसुप्तभुजङ्गाहिमुखाग्निलोष्मणा
जटाविटङ्केन्दुकलेव शूलिनः ॥ ४९ ॥
अमी सरोजप्रतिमे मुखे मुहुस्
तवातपाताम्रकपोलभित्तिनि ।
समुन्मिषन्ति श्रमवारिबिन्दवो
नताङ्गि लावण्यसुधालवा इव ॥ ५० ॥
इतोऽवतंसोत्पललास्यदेशिके
निरन्तरं गन्धवहे वहत्यपि ।
न घूर्णते स्विन्नललाटसङ्गिनी
तवालकश्रेणिरियं मनागपि ॥ ५१ ॥
अनेन पीनस्तनकम्पदायिना
निरायतेनोद्वहता कदुष्णताम् ।
अयं प्रवालादपि पाटलच्छविर्
न दूयते निःश्वसितेन तेऽधरः ॥ ५२ ॥
उदित्य पङ्क्त्या श्रमवारिविप्रुषां
निरन्तराभ्यासितरेखयाऽनया ।
तवैष कण्ठः कुटजावदातया
विलासमुक्तालतयेव भूष्यते ॥ ५३ ॥
इदं महच्चित्रममानुषं त्वया
विगाह्यते यद्वनमद्वितीयया ।

१ Tr reads प्रयुक्तचूडाहि° for प्रसुप्तभुजङ्गाहि° २ K reads °सुधाकणा for °सुधालवा ३ B reads °दैशिके for °देशिके ४ I reads घूर्णति for घूर्णते ५ I reads ऽपर for ऽधर, probably it may ऽधर ६ I reads तदेत्य for उदित्य Tr उदेत्य while for the same K उदित्वरेण for उदित्य पङ्क्त्या ७ I reads °विप्रुषो for °विप्रुषां

इमाः क्व विन्ध्यस्य भुवोऽतिदुर्गमाः
क्व राजवेश्मेभरणं भवादृशी ॥ ५४ ॥
नवोद्गताशोकपलाशकान्तिना
निकामनिर्यन्नखचन्द्रिकेण च ।
बिभर्षि कस्येदमनेन पाणिना
वरं स्वधूतेन्दुमरीचि चामरम् ॥ ५५ ॥
नृपस्य कस्यापि परिच्छदाङ्गना
यदि त्वमुच्चैर्विभवो हि कोऽपि सः ।
मरुत्पतिर्मेनकयेव तन्वि यस्
त्वयापि वालव्यजनेन वीज्यते ॥ ५६ ॥
अर्धधिमस्या परवत्यासि स्त्रिया
कयापि काऽसौ जगदेकसुन्दरी ।
नतभ्रु यस्याः स्मरचापयष्टयो
विधेयतां यान्ति भवद्विधा अपि ॥ ५७ ॥

---

१ Tr. reads °वशाभरण भवादृश for °वेश्माभरण भवादृशी K. reads त्वमोदृशी and T. भवादृश. for भवादृशी, while K. gives in marginal correction च ते वपु for the same २ T. reads नवो° for नवो° ३ च is omitted by T. ४ Tr. reads त्वया° for वरा°. ५ T. reads परिच्छदाङ्गा यदित्व° for परिच्छदाङ्गना यदि त्व°. ६ T. and B read ऽपि for हि ७ Tr reads हि for ऽपि ८ Tr. omits this whole and half of the next stanza —

अर्धधिमस्या परवत्यासि स्त्रिया
कयापि काऽसौ जगदेकसुन्दरी ।
नतभ्रु यस्याः स्मरचापयष्टयो
विधेयता यान्ति भवद्विधा अपि ॥ ५७ ॥
परस्परस्पर्धि विलासलम्पटं
वयं भवत्स्वामितया विडम्ब्यते ।.

९. B reads नताङ्गि for नतभ्रु

परस्परस्पर्धि विलाससम्पदां
त्रयं भवत्स्वामितया विकल्प्यते ।
मरुत्वतो वा रमणी रमाथ वा
कलत्रमर्धेन्दुविभूषणस्य वा ॥ ५८ ॥

इयं परिभ्रान्तिरगेन्द्रकन्दरे
सखीव ते शंसति कार्यगौरवम् ।
भवादृशः श्वापददूषितेऽन्यथा
चरन्त्यरण्ये किमधीतनीतयः ॥ ५९ ॥

अनेन खेलन्मददन्तिना वद
त्वमागता चण्डि कुतो दुरध्वना ।
विधाय विश्लेषविषादमात्रयोः
स्वकार्यनिष्टि कथय क यास्यसि ॥ ६० ॥

नायकवाक्यम् ।

इति साऽभिहिता मृगाऽऽयताक्षी
समुपोढप्रणयं यशोभटेन ।
सहसा न जगाद लज्जया नु
श्रमतः किन्तु नृपस्तु तामवोचत् ॥ ६१ ॥

---

१ I. reads सत्र for भवत्°, while T. तप° for the same २ T. reads रमाथवा and कलत्रमर्धेन्दु° for रमाथ वा and कलत्रमर्धेन्दु° respectively. ३ B. does not insert this whole stanza —

इय परिभ्रान्तिरगेन्द्रकन्दरे
सखीव ते शंसति कार्यगौरवम् ।
भवादृश श्वापददूषितेऽन्यथा
चरन्त्यरण्ये किमधीतनीतय ॥ ५९ ॥

४ T. reads भवादृशापाशविभूषित for भवादृश श्वापददूषिते° ५ K and Tr. read वनाध्वना for दुरध्वना. ६ T. reads निजगाद for न जगाद ७ Tr. reads तामुवाच for तामवोचत् and corrects तामयोचे.

श्रान्तासि कौतुकहृतेन कदर्थितासि
प्रश्नैरनेन विहितो न तवोपचारः ।
आतिथ्यमेष कुरुते परमङ्गलेखा-
संवाहनैकचतुरो निचुलानिलस्ते ॥ ६२ ॥

एवं निसर्गमधुरेण सुधारसैक-
निष्यन्दिना फणिवधूरथ सा हसन्ती ।
चन्द्रांशुना कुमुदिनीव दिनोष्मतप्ता
वीतक्लमा नरपतेर्वचसा बभूव ॥ ६३ ॥

इति श्रीमृगाङ्कदत्तसुनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पाटलादर्शनं नाम चतुर्थः सर्गः ॥ ४ ॥

---

१. Tr. and I read श्रान्तापि for श्रान्तासि २ Tr. reads °यशेन for °हृतेन. ३ Tr. reads शिशिरोपनतोपचार. for विहितो न तवोपचार . ४ Tr. reads कथम् for परम ५. B. and K. read मलया° for निचुला°. ६. I. reads °निष्यन्दिना for °निष्यन्दिना ७. Tr. reads दिनेऽस्त° for दिनोष्म°; while T. reads कुमुदिनीवदनोष्णतप्ता for कुमुदिनीव दिनोष्मतप्ता ८ I. drops this Repha ( रेफ ). ९ T. reads wrongly इति कालिदासस्य कृतौ साहसाङ्कचरिते तृतीय सर्गः This mistake has been done owing to the omission of the 3rd canto ( vide page 11 ). १०. Tr. reads इति परमगुप्तौ नवसाहसाङ्कचरिते पाटलावलोकनो नाम चतुर्थः सर्गः, B reads only चतुर्थः सर्गः and I. reads इति परिमलस्य नवसाहसाङ्कचरिते पाटलावलोकनचतुर्थ सर्ग..

## अथ पञ्चमः सर्गः ।

अथ सा वेदने नवेन्दुकाति-
स्मितमङ्के विनिवेश्य चामरं च ।
जगतीपतिमेवमाबभाषे
मसृणं मूर्तिमती विदग्धतेव ॥ १ ॥

त्वयि पुण्यवशेन दृष्टिमाप्ते
लभते शर्म गतश्रमो ममात्मा ।
उदिते हि विरोचने नलिन्या
विततमस्तामरसं विकासमेति ॥ २ ॥

अतिमात्रमुपोढसौकुमार्ये
वचसि श्रोत्रमुपेयुषि त्वदीये ।
झटिति प्रतिभासते ममायं
कठिनश्चन्दनपल्लवावतंसः ॥ ३ ॥

किमर्थं मयि सम्भ्रमोऽयमास्तां
किमियं नैव जनः परिच्छदस्ते ।
उपचारविशेषसविधाने
प्रतिपच्चन्द्र इवोदितस्त्वमेव ॥ ४ ॥

---

१. K. and B. read वदने for वदने. २. B reads स्मितम् for स्मितम् ३. K. reads अवनीपतिम् for जगतीपतिम् ४. K reads सा for °मा. ५ B. reads इद-मात्मा for ममात्मा ६ B. reads विततम् स्वरसं and gives marginal reading विततमस्क सरसं for विततमस्तामरसं. ७. B reads श्रोत्रमुपेयुषि and gives marginal reading श्रोत्रमुपेयुषि ८ L. reads झगिति for झटिति. ९. K. reads चूतन-वाङ्कुरावतंसः for चन्दनपल्लवावतंसः १०. Tr. reads किमिदं for किमयं. ११. T. reads °सन्निधाने for °सविधाने १२ K reads इवोदितः for इवोदितः

भवदिङ्गितवेदिनेव पृष्टा
यदनेनाहमुपान्तवर्तिना ते ।
किमु तत्कथयामि सम्मतं चेत्
क्रियतां मे स्वयमाज्ञया प्रसादः ॥ ५ ॥

नायकनिदेशः ।

अभिधेहि लवः कुतूहलस्य
त्वदुदन्तश्रवणे ममापि जातः ।
इति सावसुधापतेर्निदेशादथ
पातालविलासिनी जगाद ॥ ६ ॥

भुजङ्गलोकवर्णनम् ।

स तव श्रुतिमात्र एव तावत्
स्मरलीलाभवनं भुजङ्गलोकः ।
उपयाति यदेकदेशसाम्य
न मही नापि पुरी पुरन्दरस्य ॥ ७ ॥

अतिदुर्लभसूर्यभासि यस्मिं-
स्तमसामुद्धसतां तिरस्क्रियायै ।
फणिनोऽरुणकान्तिभिश्शिरस्थैर्
मणिभिर्बालमिवातपं वहन्ति ॥ ८ ॥

---

१. T. reads °इङ्गितवेदनेन and I °इङ्गितवेदिनेव both for इङ्गितवेदिनेव. २ T. omits मे; while I does not insert here मे, but it appears after आज्ञया in the marginal correction and Tr. substitutes नः for the same. ३. K. reads परं कुतूहल यत् for लवः कुतूहलस्य ४ K. ज्ञातं for जात ५. Tr. reads °निशासिनी for °विलासिनी ६ T. reads सप श्रुति° for सव श्रुति°. ७ B. and Tr. read पुरं for पुरी and T. and I. read पद for the same ८ B. reads वमन्ति for वहन्ति

अनुलिम्पति रोदसी यथेन्दु
प्रभया मां न तथेत्यसूययेव ।
पटु यः प्रमदाविलासहासै-
स्तवकैरिन्दुपरम्परा॰ प्रसूते ॥ ९ ॥

सविलासमुदस्तहस्तमुक्तैर्
निकरैर्दिग्द्विरदेन्द्रशीकराणाम् ।
परितो निचिता॰ सदैव यस्मिन्
ककुभस्तारकिता इवावभान्ति ॥ १० ॥

प्रतिभानि दधन् फणाकलापे
पृथिवीं यत्र स शेषनागराजः ।
नभसो निपतन् जवेन भित्त्वा
जगतीं गाङ्ग इव च्युतः प्रवाहः ॥ ११ ॥

भोगवतीवर्णनम् ।

विदिता खलु वासुकेस्त्रिलोक्यां
हरकण्ठाभरणस्य भोगिभर्तुः ।
ललिताङ्गनभूमिरस्ति तस्मिन्
नगरी भोगवतीति राजधानी ॥ १२ ॥

---

१ T reads रोधसी for रोदसी but it seems to be incorrect here २ Tr. reads °विलासभासा for °विलासहास°, but appears in the marginal correction °कुल्मास° for °विलास° ३ T. reads °कल्माश्रिय and Tr °कल्माश्रिर both for °परम्परा while I reads इन्दुकला प्रसूयत for इन्दुपरम्परा प्रसूते, and gives marginal correction which I am unable to find out. ४ I reads °विभान्ति for °वभान्ति ५ T reads फणाकलापे for फणाकलाप but most probably it is incorrect ६ K reads इनिपतन for निपतन ७ I reads त्रिलोक्या for त्रिलोक्यां ८ T reads हरि° for हर°

10

मणिहर्म्यतलानि रत्नदीपाः
फणिकान्तार्धविलोकितानि वीणाः[1] ।
ऋतवोऽप्यखिलाः समेत्य यत्र
स्मरसाम्राज्यमहाधुरं[2] वहन्ति ॥ १३ ॥

अनुपाधिरुपाहृतो[3] विकासः
कमलैर्यत्र विलासदीर्घिकासु ।
अपि यत्र कुमुद्वतीभिरस्तैः[4]
सहजश्चन्द्रमरीचिपक्षपातः ॥ १४ ॥

अभिकानभिसर्तुमुद्यतः[5] सन्
सपदि व्यालविलासिनीसमूहः ।
भवति स्वफणामणिप्रदीपे
तिमिरोत्सारिणि यत्र साभ्यसूयः ॥ १५ ॥

अधिरोहति यत्र वंशमुक्ता-
पटलस्मेरतटा सुरस्रवन्ती ।
सरितः[6] श्रियमीर्ष्ययेव तस्याः[7]
सुवते मौक्तिकमेव यत्पयांसि ॥ १६ ॥

अतिकान्तिगुणाभिराममूर्तिर्[8]
मधुरेण ध्वनिना मनोहरन्ती[9] ।
विदधाति सदैव यत्र यूनां
पदमङ्के वनिता च वल्लकी च ॥ १७ ॥

१. Tr. reads शाय्याम् and I. वाणा for वीणाः. २. I, T. and Tr. read भुरं for °धुरं. ३. Tr. reads °रुपाकृतो for °रुपाहृतो. ४. K. reads कुमुद्वतैनिरस्तः for कुमुद्वतीभिरस्तैः. ५. T. reads अभिकान् for अभिकाम्, while K. reads अधिकामुकवर्गेण प्रसक्तः for अभिकानभिसर्तुमुद्यतः सन् and B. substitutes अनुगन्तुम् for अभिसर्तुम्. ६. Tr. reads सलिलः for सरितः. ७. K. reads यस्याः for तस्याः. ८. K reads अतिमात्र° for अतिकान्ति°, while I. अतिशान्त° for the same. ९. T. reads °हरन्ति for °हरन्ती.

शतशो विलसन्त्युदंशुरत्न-
स्तबकाः कल्पलता यदङ्गणेषु ।
प्रतिमन्दिरमेवमेव यस्याम्
अपि चिन्तामणयः पदे लुठन्ति ॥ १८ ॥

अपि दत्तकुतूहलाः सुराणाम्
अपि वाञ्छापदमेकपिङ्गलस्य ।
अपि निर्विषया मनोरथानाम्
उरगान् यत्र विभूतयः श्रयन्ते ॥ १९ ॥

वसति स्वयमेव यत्र देवः
स सदा कल्पितहाटकेश्वराख्यः ।
स्मरमूर्धविलोचनार्चिषीव
त्रिपुरं यः शरपावके जुहाव ॥ २० ॥

शङ्खपालवर्णनम् ।

निजवंशविशेषकोऽस्ति तस्याम्
उरगाणामधिपः स शङ्खपालः ।
सगसाविति यत् फणासु धत्ते
वसुधां वासुकिना समानसारः ॥ २१ ॥

---

१ I. reads यदङ्गनेषु and T. यदङ्कणेषु for यदङ्गणेषु, but both seem incorrect. २. B. reads चिरं and I and T. चलं both for पदे ३ T wrongly reads स्वराणाम् for सुराणाम्. ४. B reads वाञ्छास्पद for वाञ्छापद ५ K. reads दूरता for निर्विषया. ६ Tr mutilates स सदा and shows the correction सदसा for स सदा ७ K reads °मूर्ध्व° and Tr °मुख्य° for °मूर्ध°, while T. omits इव after °र्चिषि. ८ T. reads सगसाविति for सगसाविति through a mistake, while Tr. mutilates सगसाविति, but the corrector has inserted स्वभरावधि for it. ९ B K. T. and Tr. read य for यत्, while I omits व in वसुधां and T. reads वसुधां for वसुधा

शशिप्रभावर्णनम् ।

जगदेकललामं तस्य कन्या
गुणवत्यस्ति शशिप्रभेति नाम्ना ।
सहसैव फणाभृतां प्रविष्टा
भुवने राहुभयादिवेन्दुलेखा ॥ २२ ॥

न कयाप्यतिशय्यते ऽतिशीघ्रं
यदियं कन्दुककेलिषु भ्रमन्ती ।
अपरं कृतमर्थवत्तदस्याः
सुतरां नाम सखीभिराशुगेति ॥ २३ ॥

स्फुरदद्भुतरूपसम्पदं ताम्
अनुकर्तुं कलयापि धार्ष्ट्यमेति ।
न रतिर्न शची न चित्रलेखा
न घृताची न तिलोत्तमा न रम्भा ॥ २४ ॥

सुर-किन्नर-सिद्धकन्यकाभिः
स्वकलाभ्यासवतीभिराप्तसख्या ।
निखिलासु गता परं प्रकर्षं
शितधीः शैशव एव या कलासु ॥ २५ ॥

अनिवारितकेलिकौतुका सा
सुतनुः स्नेहवशंवदेन पित्रा ।
विहरत्यपचीयमानबाल्या
हरशैले मलये हिमालये च ॥ २६ ॥

१ T reads भव्य for भिम २ k reads कथा for कया ३ T has °रसा for °मिसा ४ B and k read स्वकलाभ्यासवतीभिराप्त° for स्वकलाभ्यासवती भिराप्त° ५ T and Tr read सा for या ६ T reads °वशं मन for °वशंवदेन ७ k reads दपचीय° for अपचीय°. ८ T and I read हिमाचले for हिमालये

अधुना पुनरत्र विन्ध्यपादे
विहरन्त्याः कुसुमावचूडनाम्नि ।
क्वचिदप्यगमत्पलाय्य तस्याश्
चपलः केलिमृगो मृगायताक्ष्याः ॥ २७ ॥

अतिवत्सलया समं सखीभिर्
विपिने तं परितस्तया विचित्य ।
पुलिने सरितः शशाङ्कसूतेः
श्रमवर्त्येयमनीयत त्रियामा ॥ २८ ॥

कलहंसकलस्वनैर्विबुद्धा
परिवारमर्दानिदेशितं सा ।
निकृपा निचुलप्रवालशय्यां
तमथ प्रेक्षितवत्यवाप्तनिद्रम् ॥ २९ ॥

तपनीयशिलीमुखस्तदङ्के
चकितं चित्ररुचौ तया च दृष्टः ।
जलदे ललितेन्द्रचापभक्तौ
अहिमांशोरिव भासुरो मयूखः ॥ ३० ॥

अरविन्ददलश्रिया करेण
स्वयमुत्पाट्य सकौतुकं गृहीते ।
अवलोकितमेतयाथ तस्मिन्
विजयाङ्के नवसाहसाङ्कनाम ॥ ३१ ॥

---

१. B. reads एव for अत्र. २. B. I. and Tr. read कुसुमावचूल° for कुसुमावचूड°, while K. substitutes °धाम्नि for °नाम्नि. ३. T. and Tr. read °भूते for °सूते. ४. I. and T. read °श्रमवर्त्येव° and Tr. °श्रमवर्त्येन for °श्रमवर्त्येय°. ५. T. reads निदर्शितं for निदेशित. ६ T. reads °मध for °मथ. ७. K. reads चित्ररुच and substitutes सहसा for चकित. ८. T. reads °जलिनेन्द्र° and K. °दलितेन्द्र° both for °ललितेन्द्र° and T. reads °भुक्ता for भक्ता. ९. K. reads भास्वरो for भासुरो. १०. T. I. and Tr. read °मुत्थाय for °मुत्पाट्य. ११. K. reads विजयाङ्कं for विजयाङ्के.

अविशन्नरनाथ नाम पूर्वं
हृदयेऽस्यास्सहसाऽथ[1] पुष्पकेतुः ।
अमृतांशुमरीचिलुप्तनिद्रे[2]
लभते यत् कुमुदेऽन्तरं द्विरेफः ॥ २२ ॥

नवमेघमलीमसाद्युगान्ते[3]
वसुधामुद्धरतो रथाङ्गपाणेः ।
परितः श्रमवारिबिन्दवो ये[4]
निरपीयन्त पयोधिशुक्तियूथैः[5] ॥ २३ ॥

प्रकृतिः[6] किल यस्य ते परीता
परिणामेन तदन्तरेऽत्र[7] हंसः ।
शयनान्तगतं मृणालशङ्कि
हृतवान्हारमधीरलोचनायाः ॥ २४ ॥
(सन्दानितकम्[8])

उदडीयत[9] खे सुखेन बिभ्रद्
भुजगेन्द्रप्रतिमं तमञ्जसा सः[10] ।
अपदार्पितवैनतेयशङ्कः
फणिकन्यासु मुहूर्तविक्लवासु[11] ॥ २५ ॥

स च विन्ध्यवनान्तराजिमेताम्
अविशन्मारुतपीतपद्मगन्धाम् ।

---

१. K. reads रा मनो य and B सहसैव, both for सहसाथ २. B reads शिशिरांशु° for अमृतांशु° ३. B and I read पतन्ता for युगान्ते, while T नवमेघमलीश्यामतन्ना for नवमेघमलीमसाद्युगान्ते. ४. Tr reads °न्धे. for ये ५. T. reads °थपै for °यूथैः. ६. T. and Tr read प्रकृतिं for प्रकृतिः ७. T. and I. read तमन्तरेऽत्र and Tr. तमन्तरेय both for तदन्तरेऽत्र. B and T do not insert सन्दानितकम् ९. T. reads उदधीयत for उदडीयत. १० Tr reads मः for सः. ११ K. reads फणिनीषु मुहूर्तविक्लवेषु and gives in the margin फणिदारासु मुहूर्तविह्वलासु for फणिकन्यासु मुहूर्तविक्लवासु.

अतिदूरविकृष्टनागकन्या-<br>
चकितोदञ्चितदीर्घनेत्रमालः ॥ ३६ ॥

अहिराजसुतानिदेशतोऽस्मिन्<br>
असमासेषुविलोकनोत्सवोऽपि ।<br>
अथ हंसमितस्ततो विचेतुं<br>
विजने नागवधूजनः प्रवृत्तः ॥ ३७ ॥

शबलास्विह कृष्णसारयूथैस्<br>
समदक्रोडसनाथपल्वलासु ।<br>
गहनास्वपि तद्गवेषणार्थे<br>
वनलेखासु मम स्वयं प्रयत्नः ॥ ३८ ॥

स मया न तटेषु निर्झराणां<br>
सरसां नाप्सु न पुण्डरीकषण्डे ।<br>
सरसीष्वपि नायतोर्मिलेखा-<br>
न्तरपारिप्लवसारसासु दृष्टः ॥ ३९ ॥

सितचामरधारणे नियुक्तां<br>
दुहितुस्तेन भुजङ्गमाधिपेन ।<br>
अवधारय पाटलेति नाम्ना<br>
तनयां मामुरगस्य हेमनाम्नः ॥ ४० ॥

---

१ K. reads °लील and Tr. °मूल for °माल. २. T reads अभिराज° for अहिराज°. ३. B. reads ऽयम् for ऽस्मिन्. ४. Tr. and K. read असमासेष्ट° for असमासेषु°. ५. T. reads विचेतुर् for विचेतुं. ६. K and Tr. read शबलास्मसु for शबलास्विह and T. शबलादमसु for the same, while I. reads शबलास्मिन्, but has the last न् struck off and placed भु in its stead. ७. T. reads °पल्वलाम्भ. for °पल्वलासु. ८. T. I. and Tr. read इह for अपि. ९. B. T. and I. read ऽपि for सु. १०. K. reads वाप्सु for नाप्सु; while T. न स्फुटपुण्डरीकषण्डे for नाप्सु न पुण्डरीकषण्डे. ११. Tr. reads च for ऽपि. १२. Tr. reads °धारणानियुक्तां for °धारणे नियुक्तां. १३. K. reads °धाम्नः for °नाम्नः.

अचले विचयैः पतत्त्रिणोऽयं
फलितः साधु ममाहितश्रमो ऽपि ।
यदितः पुरुषोत्तमोऽसि दृष्टो
वनमध्ये निबिडश्रियोपगूढः ॥ ४१ ॥

उपरोधमिमं न मन्यसे चेत्
यदि वाऽस्मासु तवास्ति पक्षपातः ।
वद तच्चरता क्वचिद्वने ऽस्मिन्
स सहारो विहगस्त्वया नु दृष्टः ॥ ४२ ॥

न स दृष्टिमितस्तवापि मन्ये
तदहं तद्विचयादितो निवर्ते ।
ननु ताम्यति काममात्तचिन्ता
चिरयन्त्यां मयि सा ऽहिराजकन्या ॥ ४३ ॥

अथ वा मृगभङ्गिनोपनीते
विधिना सा नवसाहसाङ्कबाणे ।
प्रणयार्पितलोचना सनाम-
न्यधुनाऽऽयालिखितेव नूनमास्ते ॥ ४४ ॥

पुनरपि पाटलोक्तिः ।

इति सा समुदीर्य तत्पुरस्तात्
अवलोक्यैव पुनश्चमत्कृतेव ।

---

१ T. reads अचलेऽपि चलेऽपि च पतत्त्रिणो for अचल विचय पतत्त्रिणोः २ K. and I. read ममाहित° for ममाहित°; while B समाहित° for the sa[me] ३ T. wrongly reads दृष्ट for दृष्टो ४ K reads विरल° for निबिड° and T. and Tr निविड° for the same ५ K reads अपकार for उपरोधं ६ K reads स्वपि for ऽस्मासु ७ Tr. reads म for स. ८. T. and I. read न and Tr. स, both for नु ९ T. reads न for स. १० Tr. reads °न्यसने ऽप्युल्लिखितेव for °न्यधुनाऽऽयालिखितेव. ११. I reads पुर for पुन. १२ T. reads चमत्कृ- त च for चमत्कृतेव I. also reads the same.

स्फुटकेलिमृगोपनीतबाण-
स्मरणस्मेरमुखो पुनर्जगाद ॥ ४५ ॥
स नृलोकशशी त्वमेव मन्ये
मृगयाबद्धरुचिः स यत्पृषत्कः ।
भुवनाभयदायिनाममीषां
भवतः सवदतीव सायकानाम् ॥ ४६ ॥
स्थितमेतदयोमुखेष्वमीषु
स्फुटवर्णं तव नामधेयलक्ष्म ।
अवनीतिलक त्वयि प्ररूढ
मम सन्देहलवं बलात् प्रमार्ष्टि ॥ ४७ ॥
समुपैति सनाथतां किमन्यत्
त्रितयेन त्रितय नरेन्द्रचन्द्र ।
त्रिदिवं नमुचिद्विपा त्वयेय
वसुधा वासुकिना रसातल च ॥ ४८ ॥
सनये नृपतावखण्डिताज्ञे
त्वयि शासत्यवनीं दिलीपकल्पे ।
विदधीत पदं सुदुर्नये कस्
तमृते हारमलिम्लुच विहङ्गम् ॥ ४९ ॥
असतामसुहृन्न लज्जतेऽय
किमिति ज्याकिणलाञ्छितो भुजस्ते ।

---

१ Tr reads मनुलोकशशी for स नृलोकशशी, K स नृलोकशशि and T स शुलोकशशि° for the same २ Tr reads अधोमुखस्तु for अयोमुखेषु ३ K reads °मतत् for °लक्ष्म ४ T reads चन्द्र for चन्द्र ५ T reads नृपतापखण्डिताज्ञै for नृपतावखण्डिताज्ञे ६ T reads दिलीपकल्प for दिलीपकल्पे while K दिलीपतुल्य for the same ७ B and K read निदधीत for विदधीत ८ I reads °मलिम्लुचा for °मलिम्लुच, but seems to have been corrected as °मलिम्लुच ९ I and Tr read रक्षते for लज्जते

अवनौ यदनेन रक्षिताया
वयमस्या मुषिता पतत्त्रिणाऽपि ॥ ५० ॥
अपयातु खग स तेन कृत्य
नहि मे[2] हारमिह त्वमेव याच्यं ।
न दिशन्ति किमत्र चोरलुम
वेल पञ्चाशभुजो वसुन्धराया ॥ ५१ ॥
पथि चेदवतिष्ठसे प्रणीते
मनुना नाथ तदर्प्यतां स हार ।
न नरेन्द्र भवादृशा कदाचित्
पदवीं न्यायविदां विलङ्घयन्ति ॥ ५२ ॥
निजमर्थयसे शिलीमुख चेत्
भवता यत्नवताऽपि किं स लभ्य ।
त्वमनागसि यच्छशिप्रभाया
प्रहरन् केलिमृगे कृतव्यलीके ॥ ५३ ॥
अथ वा मृगयिष्यते न हार
विशिखं दास्यति चोरगेन्द्रकन्या ।
त्वयि नेत्रपथातिथित्वमासे
सुलभोऽस्या [10]हि महाजनोपरोध ॥ ५४ ॥

---

१ I omits the verse while K reads हि हता for मुषिता २ Tr reads मम for मे and K मे for the same ३ T reads याच्य for याच्यं while I °मिव त्वमेव याच्य for °मिह त्वमेव याच्यं ४ T reads दिशन्ति and K दर्शन्ति both for दिशन्ति ५ T I and Tr read वसु for वल ६ B and K read यत्यस्थित for यदाश्रित ७ B and I read न्यायविदो for न्यायविदां ८ T reads [illegible] for भवता यत्नवताऽपि ९ K reads [illegible] for कृतव्यलीके १० T reads °ऽपि for हि and Tr सभाजनापराध for महाजनोपरोध

अतिदूरत ऐव दृश्यतेऽयं
स्वमिवाभ्युन्नतिमानितो नगेंद्रः ।
वहति प्रणयोपरुद्धकूला
कलहंसैरमुमन्तरेण रेवा ॥ ९५ ॥

अमृतेन्दुकलासहोदरा ऽस्याः
सुतनुस्तीरतलेऽवतिष्ठते सा ।
उरसीव पयोधिराजकन्या
वनमालाभरणे रथाङ्गपाणेः ॥ ९६ ॥

तदिर्तः स्वयमेव देव गत्वा
पुलिनं सोमभुवस्तरङ्गवल्याः ।
खगलुप्तविभूषणां क्षितौ ते
फणिराजेन्द्रसुतां विबोधयेहि ॥ ९७ ॥

सानन्दं नायकोक्तिः ।

इति मद्वचसा स्मरैकदूतं-
प्रसवोल्लासवसन्तवासरेण ।
स नृपः कमपि प्रमोदमापत्
घनराजिध्वनिनेव नीलकण्ठः ॥ ९८ ॥

---

१. I. reads मत्र for एव, while K. and Tr. अतिदूरतमेव for अतिदूरत एव. २. B. reads अत्युन्नति° for अभ्युन्नति°. ३. B and K. read प्रणयावरुद्ध° for प्रणयोपरुद्ध°. ४. B. reads अमलेन्दु° and K. अमरेन्दु° both for अमृतेन्दु°. ५. Tr. reads °सहोदरी सा for °सहोदराऽस्याः. ६. Tr. reads ऽस्याः for सा. ७ Tr. reads °भरणा for °भरणे. ८. K. reads उदितः for तदितः. ९ D. T. and I. read निबोधय and Tr. विलोकय for विबोधय. १०. T. reads °मूल° and I. °भूर° for °दूत°; while Tr. स्मरेषुभूत° for स्मरैकदूत°. ११. T. reads स कृपः for स नृप; while I. substitutes किमपि for कमपि. १२. B reads घनगर्जित° for घनराजि°; while T. reads पुनराजि° for the same through mistake.

अवदच्च विहस्य पार्थिवेन्द्रः
फणिराजेन्द्रसुतोविलासिनीं ताम् ।
वचसोत्कथता मयूरशावान्
नवजीमूतनिनादसोदरेण ॥ ५९ ॥
अपि नाम मृदूनि वेत्सि वक्तुं
निपुणं न्यायमनुज्झती वचांसि ।
प्रसभं विहितास्त्वया यदेते
वयमात्मस्खलितेऽपि सापराधाः ॥ ६० ॥
इदमोमिति गृह्यते वचस्ते
सह मेधाविनि कस्त्वया विवादः ।
यदिमा विशदोर्द्रमा गिरस्ते
पथि सिद्धान्तसमीक्षिते चरन्ति ॥ ६१ ॥
तदनेन विनोदयाशु तावत्
मम हारेण मनः शशिप्रभायाः ।
इह पल्वलसैकतेषु यावत्
तदलंकारमवेक्षितुं यतिष्ये ॥ ६२ ॥

---

१ T. reads °सुता for °सुता°. २ I reads विलासिनीनाम् for °विलासिनी ताम्, but it can be believed that the letters नाम् are ताम्, and besides, नी has Anuswar in the correction ३ B reads मरीचि° for मयूर°. ४ B T. and I. read असि° and Tr. अय° for अपि° ५ T B and I read निपुणे for निपुण ६ Tr reads स्वयं for त्वया, while T adds हि after त्वया ७ K reads ननु for सह ; while Tr. reads कथमेकाकिनिनः for सह मेधाविनि क and there appears in the correction, सह for कथ and मिति for किनि in the reading. ८ B. reads विपमाद्रमा and Tr विषमोद्रमा both for विशदोद्रमा. ९. B. and K. read °समीहित for °समीक्षिते, while I. reads °समीक्षते for the same. १०. B. reads विनोदया° for विनोदया° and gives marginal reading विनोदया for the same, while K reads मदलं विनिवेदयाशु तावत् for तदनेन विनोदयाशु तावत्. and B. interchanges this sloka to the next one ११. K reads समहं हारहरं दशो म पदमे and T. समहं हारमवेक्षितु यतिष्ये for तदलंकारमवेक्षितुं यतिष्ये

हारप्रदानम् ।

अथ हारमनादरेण कण्ठात्
स्वयमाकृष्य स कूटचन्द्रशोभम् ।
विहसत्त्वरविन्दकोशताम्रे
निदधे पाणितले विलासवत्याः ॥ ६३ ॥
अपि कोशगृहोदरे दुरापं
फणिनां भर्तुरुपोढविस्मया सा ।
तमुदञ्चितपक्ष्मणा मृगाक्षी
लिखितेनेव ददर्श लोचनेन ॥ ६४ ॥

शशिप्रभाहारधारणम् ।

अवकृष्य सलीलमुत्तरीयात्
सितमेघादिव तारकावितानम् ।
उरसा स बभार हारमीशः
स्तनपर्यङ्कशयं शशिप्रभायाः ॥ ६५ ॥
वदति स्म हसन् रमाङ्कदस्ताम्
उरगस्त्रीमथ भर्तुरिङ्गितज्ञः ।
यदि कौतुकवत्यमत्सरस्ते
तदितः किञ्चिदितोऽवलोकयेति ॥ ६६ ॥
अथ हारलताविकृष्टदृष्टिः
सहसा वारिविहङ्गमावलुप्तम् ।

१. K. reads विदधे for निदधे. २. B. reads कोशगृहे दुरापमेषा for कोशगृहोदरे दुरापं and T. कुशगृहोदरेन्दुराप for the same; while Tr. has this line thus—
अपि के .....हार . दुरापं.
३. T. substitutes सु for स्म through a mistake. ४. K. reads अनुकृष्य for अवकृष्य. ५. T. reads तार° for हार°. ६. B. reads अमत्सरा स्वं for अमत्सरस्ते. ७. B. reads °दिश° for °दितो° and T. I. and Tr. °दिशा° for °दितो°. ८. K. reads °विसृष्ट° for °विकृष्ट°. ९. In Tr. there are two letters after सहसा mutilated.

उरगेन्द्रसुताविभूषणं तेन्
नृपतेर्वक्षसि पाटला ददर्श ॥ ६७ ॥

पुनः पाटलावाक्यम्।

दशनच्छदमौक्तिबिम्बशोभं
स्नपयन्ती सुधयेव हासकान्त्या।
अवदद्य वचांसि पार्थिवं सा
चतुरैवं परिहासपेशलानि ॥ ६८ ॥

अपहर्तुमगास्त्वमेव हारं
किमितः कल्पितराजहंसरूपः।
विदितोऽसि घना तवोरगाणां
नगरेऽस्त्येव हि कामरूपवार्ता ॥ ६९ ॥

परवञ्चनपण्डिता मतिस्ते
यदि नैवं कथमन्यथा नरेन्द्र।
इदमाभरणं हरस्यरण्ये
हरहासैकसित शशिप्रभायाः ॥ ७० ॥

अवनीवलये त्वमात्तदण्डः
सहसे नाँ अविनयांशमित्यवैमि।
अथ च स्थितिमात्मना विधत्से
विषये दस्युनिषेविते किमेतत् ॥ ७१ ॥

---

१ T reads °विभूषवन्त for विभूषण तन २ B and I read त for तन्. ३ T. reads °मात्रबिम्बशोभ for °मौक्तिबिम्बशोभम् ४ T. reads हासकान्त्या for हासकान्त्या ५ T reads अपगांसि (पि ?) for च वचांसि. ६ T. reads °मना for °मता ७ T reads घनातवोरगाणां for घना तवोरगाणां, while Tr. reads विदितां हि for विदितोऽसि. and mutilates two letters afterwards ८ T. reads परवञ्चनपण्डितामतिस्ते for परवञ्चनपण्डिता मतिस्ते ९. T. reads नरेन्द्र। for नरेन्द्र. १० T. reads नाँ for ना

क्षितिप स्मयसे किमेष केलिर्
न भवत्यर्पय हारमस्मदीयम् ।
नयवर्त्मजुषो भवादृशाः किं
न परस्वग्रहणादिह त्रपन्ते ॥ ७२ ॥

अथवा परतोऽस्तु नर्म नास्यां
भुवि देवेन समोऽस्ति पार्थिवोऽन्यः ।
अपविद्धनया न यस्य दृष्टेर्
अपसर्पन्त्यथ खेचराः किमन्ये ॥ ७३ ॥

अनयोः किमपि त्वया विलासिन्
परिवर्तोऽयमकारि हारयोर्यः ।
वचसामवकाशमीश दत्ते
स न कस्यानृजुचेतसो जनस्य ? ॥ ७४ ॥

विहितो नहि वक्षसि त्वयाऽयं
नृप हारः फणिराजकन्यकायाः ।
किमपीप्सितमात्मनो विधातुर्
विहितं सूत्रमिदं मनोभवेन ॥ ७५ ॥

ननु याम्यमुना शशिप्रभायास्
तव हारेण मनो विनोदयामि ।

---

१. T. I. and Tr. read अपत्रपन्ते for इह त्रपन्ते. २. K. and Tr. read परवस्तु नर्मणास्यां for परतोऽस्तु नर्म नास्यां. ३. Tr. reads ऽस्तु for ऽस्ति. ४. Tr. reads किमस्य for किमन्ये; while T. substitutes अथ for अपि. ५. T. reads अनया for अनयो. ६. B. and K. read धत्ते for दत्ते. ७. Tr. reads न, च, हन् for नृप हारः. ८. Tr. reads किमिवेप्सितं for किमपीप्सितं; while B. Tr. and I. विधातु for विधातुः. ९. T. reads नन यान्यमुना and Tr. ननु यान्यमुना both for ननु याम्यमुना; while B. substitutes अधुना for अमुना. १०. B. and Tr. read विस्मेभयामि for विनोदयामि, but B. has in the margin विनोदयामि.

त्वयि सोऽप्यलमेव सान्द्रचेतस्
सुतनुः स्नेहरसार्द्रतामुपैतु ॥ ७६ ॥
उचितं निजसायकानुरोधात्
अहिराजेन्द्रसुतोपसर्पणं ते ।
परतोऽस्तु शरस्त्वदर्थिता सा
किमु न त्यागवशंवदा ददाति ॥ ७७ ॥
सरसो ऽस्य विमुञ्च तीरलेखाम्
अनुरेवा पुलिनं गृहाण यात्राम् ।
उरगाधिपरूपपक्षपातं
शमय व्यालवधूविलोचनानाम् ॥ ७८ ॥

शशिप्रभादर्शनार्थं गमनम् ।

इति वल्गु वचो निशम्य तस्याः
स नृपः पन्नगवामलोचनायाः ।
स्थितमत्र वचस्यलङ्घनीये
तव कल्याणि मयेति तामुवाच ॥ ७९ ॥
अथ साऽनृजुवादिनी विधाय
क्षितिपालं पुरतश्चचाल बाला ।
हृदयेन परागमर्श चैवं
विलसन्मांसलविस्मयो नरेन्द्रः ॥ ८० ॥

---

१. Tr. reads सान्यमेवमासचनाति for साप्यलमेव सान्द्रचेत ; while T. reads this latter quarter of the stanza भवतुन्मे हरसार्द्रतामुपैतु २ B. reads उपैति for उपैतु and भवतु for सुतनु, but for the latter reading it has in the margin सु for भ ३. T. reads अनि° for अहि°. ४ Tr. reads शर्त नार्पिता for शरस्त्वदर्थिता ५ Tr. reads वशं विधा for वशंवदा. ६. K and Tr read सुभगम् for यात्राम् ७ II T. and I read °विलोचनेषु for °विलोचनानाम्. ८. I. reads पन्नगवामने° for पन्नगवामलो°. ९ K. and Tr read चचार for चचाल ; while T. reads क्षितिपालम्पुरश्चचार for क्षितिपालं पुरतश्चचाल through a mistake. १०. I. drops one म and reads परामर्श for परागमर्श.

अरण्यानी क्वेयं[1] धृतकनकसूत्रः क्व स[2] मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।
क्व तत् कन्यारत्नं ललितमहिभर्तुः क्व च वयम्
स्वमाकूतं धाता किमपि[3] निभृतं पल्लवयति ॥ ८१ ॥

अथ मदगजलीलाखेलगामी स कृत्वा
कनकविशिखयाञ्चाव्याजनव्याजकान्तः ।
अवनिहरिणलक्ष्मा[4] साहसोपार्जितश्रीः
अहिपरिवृढकन्यालोकनाय प्रतस्थे ॥ ८२ ॥

इति[5] श्रीमृगाङ्कगुप्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभावलोकनार्थप्रस्थानं नाम पञ्चमः सर्गः ॥ ५ ॥

---

१. T. reads क्वेय for क्वेय. २ B. reads च for स. ३. K. substitutes किमिति for किमपि and B. किमिव for the same, while T. and Tr. read निभृत for निभृतं I. also reads निभृतः, but has in the margin निभृतं. ४. K. reads °लक्ष्या for °लक्ष्मा ५ Tr. reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते शशप्रवेशो नाम, T. reads इति कालिदासस्य कृतौ साहसाङ्कचरिते and I इति परिमलस्य नवसाहसाङ्कचरिते all for the whole quolophone.

## अथ षष्ठः सर्गः।

नायिकावस्थावर्णनम्।

तदा फणीन्द्रकन्योऽपि बाणनामाङ्कसूचिते।
नरेन्द्रतिलके तस्मिन्नभिलाषं बबन्ध सा ॥ १ ॥
सहसा हृदये तस्याः निदधे मन्मथः पदम्।
अशोकयष्टिस्तबके सराग इव षट्पदः ॥ २ ॥
अवशा सा ऽभवच्चित्रं नाम्नापि पृथिवीपतेः।
न तदस्त्यत्र यन्नास्त्रं सन्नद्धस्य मनोभुवः ॥ ३ ॥
स्मराग्निकणमेणाक्ष्यास्तस्याः समुददीपयत्।
मकरध्वजसाम्राज्यसचिवो मलयानिलः ॥ ४ ॥
सोल्लसत्स्मरलीलेन नवेन वयसा बभौ।
उन्मिषन्मधुलेखेन मुकुलेनेव मालती ॥ ५ ॥
सा ऽतनुश्वसनस्पृष्टपाटलाधरपल्लवम्।
उवाह मुखमुज्जृम्भमम्भोजमिव पद्मिनी ॥ ६ ॥
निकामसरले तस्मिन् सा मुहुस्तरलेदृशौ।

---

१. B reads ऽसौ for ऽपि. २. T. reads बबाल (?) for बबन्ध. ३ I. reads तस्य for तस्याः, while B K. and Tr read विदधे for निदधे ४ K. reads ऽप्यस्यापि for नाम्नापि. ५. Tr. reads समराङ्कण° for स्मराग्निकण°, while T. स्मराग्निरण° for the same. ६. B. and K. read मुद्दीपित for समुददीपयत्, while I. reads the same, but the letter प seems like य. ७ K. reads मारुत सखा for मलयानिल. ८. K. reads 'पिब for बभौ ९ T. omits the following portion.—

............ सा मुहुस्तरले दृशौ।
चारु नरेन्द्रचन्द्रस्य चिक्षेप न सखीजने ॥ ७॥
नरेन्द्रनामाङ्कलिपिस्तामानन्दयति स्म सा।
कुमुद्वतीमिवाखण्डशीतगुकिरणच्छटा ॥ ८ ॥
हेमपुङ्खाङ्किते मार्गण. ..........।.

शरे नरेन्द्रचन्द्रस्य विक्षेपे न सखीजने ॥ ७ ॥
नरेन्द्रनामाङ्कलिपिस्तामानन्दयतिस्म सा ।
कुमुद्वतीमिवोदञ्चद्बालेन्दुकिरणच्छटा ॥ ८ ॥
हेमपुङ्खाङ्किते तस्मिन् शरे करमुपेयुषि ।
चलेद्विवेश सा बाला दीक्षां वैवाहिकीमिव ॥ ९ ॥
तेनावामतदाताम्रपाणिस्पर्शेन पत्रिणा ।
स्फुरत्कान्तिचयव्याजादमुच्यन्तेव पल्लवाः ॥१०॥
नवीनसाहसाङ्कस्य कामदेवाकृतेरयम् ।
मालवैकमृगाङ्कस्य सिन्धुराजस्य सायकः ॥११॥
पुनःपुनरिति स्वादु नृपतेर्नामलक्ष्म सा ।
अपठच्चारुबिम्बोष्ठलुठद्दशनचन्द्रिका ॥ १२ ॥

सेन्द्रानितकम् ।

अधीत्य कौतुकेनाथ कृतपञ्चममूर्च्छनाः[१२] ।
तदग्रे नृपनामाङ्कं जगुः पातालकन्यकाः ॥ १३ ॥

---

१. Tr. and I. read मुमोच for चिक्षेप. २ B. K. and I. read °दञ्चद्बालेन्दुकरण for °दञ्चद्बालेन्दुकिरण°. ३. After the letters चला I. does not insert the following portion.—

· · द्विवेश सा बाला दीक्षां वैवाहिकीमिव ॥ ९ ॥
तेनावामतदाताम्रपाणिस्पर्शेन पत्रिणा ।
स्फुरत्कान्तिचयव्याजादमुच्यन्तेव पल्लवाः ॥ १० ॥
नवीन . . . . . . . . . ।,

but this portion appears in the marginal correction. ४ In K. the letter वै appears exactly like चै. ५. Tr. reads तेनावामस्तदा° for तेनावामतदा°. ६ II. reads पाणिसर्पेन for पाणिस्पर्शेन. ७ Tr. reads न (मू) नाने for नवीन°. ८. B reads मुख्ये for साहस. ९ K. T. and I read स्वादुर for स्वादु. १०. B reads अपठत्स for अपठत्, but gives in the margin अपठत् for the same. ११. T. omits this. १२. T. reads °मूर्च्छनाद and Tr °मूर्च्छना both for °मूर्च्छना. १३ B and K. read तदग्र° for तदग्रे, while Tr तमग्रे for the same. १४ Tr reads जगौ पातालकन्यका for जगुः पातालकन्यकाः.

अदृष्टेऽप्युत्सुका रात्रि[1] तद्गीतेन बभूव सा ।
प्रबोधे[2] यदनङ्गाग्नेः पञ्चमः प्रथमा समित् ॥ १४ ॥
अवेपत समुन्मीलद्विलासकुसुमाञ्चिता[3] ।
मनोभवानिलस्पर्शवशाद्वनलतेव[4] सा ॥ १५ ॥
नवानुरागमङ्गेन[5] व्यक्तचिह्नचुम्बिना ।
विनावचनमाचख्यौ सखीषु चतुरासु सा ॥ १६ ॥

शशिप्रभाया. प्रश्न ।

सावहित्थमथेत्थं सा सखीजनमभाषत ।
सुधानिष्यन्दजडया शरदिन्दुमुखी गिरा[6] ॥१७॥
अभेदमिन्दुना नीतः साचिव्य[7] मेनकेतुना ।
सख्यः क[8] सिन्धुराजोऽयं साहसाङ्को[9] निरूप्यते ? ॥१८॥
किमेव मवतिष्ठध्वे[10] मौन मुञ्चत शंसत ।
उन्मीलति यदन्तर्मे बलात्कौतुककन्दली[11] ॥१९॥

माल्यवत्या उत्तरम् ।

अथ माल्यवती नाम तत्सखी सिद्धकन्यका ।
इति स्मितसुधार्द्रेण वचसा तामभाषत[12] ॥२०॥

---

१ K. and Tr read °कारा for रात्रि २ T reads प्रबोधयद्° for प्रबोधे यद° ३ K reads °ञ्चिते for °ञ्चिता ४ K reads वनलताङ्के for वनलतेव सा ५ B reads °सङ्गेन for °मङ्गेन, but in the margin it gives °मङ्गेन and Tr reads °मङ्कुन and corrects °मङ्गेन ६ K reads सदा for गिरा while Tr substitutes °मुखा for °मुखी ७ T Tr and I. read सामान्य for साचिव्य ८ T. reads तदय for सखय ९ T reads सहासाङ्को for साहसाङ्को, while B substitutes निगद्यते for निरूप्यते १० B reads अवतिष्ठध्व for अवतिष्ठध्वे. I अथ तिष्ठध्व and Tr ° मवतिष्ठे ह्व for the same, while I substitutes अथ for अव°. ११ B and I read उन्मीलतीयमन्तर्मे for उन्मीलति यदन्तर्मे and I. is quite mistaken here It reads उन्मीलतीयमथ मे चलात् for उन्मीलति यदन्तर्मे बलात् १२ K reads °मभाषत for °मभाषत, but gives the reading in the margin °मभाषत

सखि साहसिकः सोऽयमवन्तितिलको नृपः ।
गीयते केतकापाण्डु यस्योरगपुरे यशः ॥२१॥
तं काश्यपीसहस्राक्षमद्राक्षमहमेकदा ।
गता श्रीमन्महाकालपर्वण्युज्जयिनीं पुरीम् ॥२२॥
तन्वि तिग्मांशुनेव द्यौर्निशेव शशलक्ष्मणा ।
सा सनाथा पुरी तेन वज्रिणेवामरावती ॥२३॥
रम्भा त्वयेव यत् सत्यं तेनाऽऽलि नलकूबरः ।
त्याजितो रूपजं गर्वमुर्वीमकरकेतुना ॥२४॥
अकलङ्काकृतेस्तस्य चतुःषष्टिकलावतः ।
तुलाधिरोहेवाके कः षोडशकलः शशी ॥२५॥
तस्यावनिप्रदीपस्य ते ते नैसर्गिका गुणाः ।
क नाम न प्रकाशन्ते रवेरिव मरीचयः ॥२६॥
न नागेषु न सिद्धेषु न नरेष्वमरेषु च ।
अवापि क्वापि संवादस्तद्रूपोल्लेखरेखया ॥२७॥
स हि केनापि कृत्येन गां गतः श्रूयते पुनः ।
निह्नुतैकभुजद्वन्द्वो देवः श्रीवत्सलाञ्छनः ॥२८॥
किमन्यत्तव सन्तुष्ट्यै पश्य चित्रे लिखाम्यहम् ।
चिरस्य दीर्घनयने तवास्तु नयनोत्सवः ॥२९॥

---

१. T. reads कैतका° for केतका°. २. K. reads यस्यानङ्गपुरे for यस्योरगपुरे. ३. T. reads नलकूबरम् for नलकूबर. ४. K. reads रूपसौभाग्य° for रूपजं गर्व°. ५. K. reads °कलाभृत for °कलावत. ६. T. reads क षोडा शकल शशी for क षोडशकल शशी; while Tr तुलाधिरोहणे साङ्क for तुलाधिरोहेवाके. ७. K. and T. read स्तेते for ते ते. ८. K. reads °ष्वथ for °षु च; while Tr. and T. substitute न for च. ९. K. reads तद्रूपोपमलेखया and Tr. तद्रूपालेख्यलेखया both for तद्रूपोल्लेखरेखया. १०. K. reads सखि for स हि. ११. K. reads °नाभागतः for °न गां गत. १२. K. reads °च्छन for °लाञ्छन. १३. B. T. and Tr. read किमरयन्तमसन्तुष्टे and I. किमन्यसमसन्तुष्टे both for किमन्यत्तव सन्तुष्ट्यै.

आकृतिलेखनम् ।

अथ सा सिद्धतनया त लिलेख शिलातले ।
हृदि तुरंगराजेन्द्रदुहितुर्मीनकेतन ॥२०॥
तदोल्लिखितभूपाल तया चिन्तितकामदम् ।
चिन्तामणेरप्यधिक शिलातलममस्त सा ॥२१॥
ततश्चित्रगते तस्मिन् महीपाले मदालसा ।
समभेवाहिकन्याना पेतुर्नेत्रपरम्परा ॥२२॥
पपौ शशिप्रभाप्येन चिरमुत्पक्ष्मलेखया ।
पुनरुक्तीकृतोत्सिक्तकर्णेन्दीवरया दृशा ॥२३॥
रूपमास्वादयामास तस्याऽऽलेख्यगतस्य सा ।
भ्रमरीवारविन्दस्य सुधासहचर मधु ॥२४॥
आनीयताकुलत्व सा त्रितयेन तनूदरी ।
विस्मयेनातिसान्द्रेण मदेन मदनेन च ॥ २५ ॥
विवेश हृदये तस्या स चित्रलिखितो नृप ।
शरत्प्रसन्ने सरित प्रतिमेन्दुरिवाम्भसि ॥ २६ ॥

---

१ T I and Tr substitute च for तु २ Except K all others read मीनं कतनम् for मीनकेतन ३ T reads तथा for तदा ४ K T and Tr read सदा for तया while Tr substitutes चिन्तन for चिन्तित° ५ B reads °मम न्यस्त for °ममस्त सा ६ Tr does not give the following two stanzas —

ततश्चित्रगते तस्मिन् महीपाले मदालसा ।
सममेवाहिकन्याना पतुर्नेत्रपरम्परा ॥ ३२ ॥
पपौ शशिप्रभाप्येन चिरमुत्पक्ष्मलेखया ।
पुनरुक्तीकृतात्सिक्तकर्णेन्दीवरया दृशा ॥ ३८ ॥

७ T rea ls मदालसा for मदालसा ८ T reads परम्परा for परम्परा ९ B reads त्यन for °प्येन १० K reads उत्फुल्लया दृशा for उत्पक्ष्मलेखया ११ T reads पुनरुक्तिकृतासिक्त for पुनरुक्तीकृतात्सिक्त° and substitutes या दृ° for °या दृ° १२ Tr and I read अनी° for आनी° १३ T reads तमोदरी and Tr तनोदरी both for तनूदरी, wl ile I तकदरी for tl e same १४ B reads हृदयं for हृदये and K reads चित्रालिखिता for चित्रलिखिता

स्तनपत्रलतां तस्या बिभेद पुलकोद्गमः ।
सत्यं यदन्तरङ्गेण बहिरङ्गो निरस्यते ॥ ३७ ॥
तस्याः कुचयुगे किञ्चिन्निश्वासः कम्पमादधे ।
रथाङ्गनाममिथुने सायन्तन इवानिलः ॥ ३८ ॥
तस्याः स्वेदलवश्रेणिच्छद्मना वदनश्रिया ।
विश्रान्तोऽन्तरनङ्गस्य लाजाञ्जलिरिवोज्झितः ॥ ३९ ॥
शङ्के शरमृजुकुर्वन् ददृशे मन्मथस्तया ।
यत् सा मृदुक्वणत्काञ्चिकिङ्किणीकमकम्पत ॥ ४० ॥
एष दृष्टस्त्वयेत्युक्ता सख्या सा साध्वसाकुला ।
गद्गदाक्षरमव्यक्तं कृच्छ्रात् प्रतिवचो ददौ ॥ ४१ ॥
चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि ।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा ॥ ४२ ॥
दृष्टा सखीभिस्साकूतं सा बालाधरपल्लवे ।
दधौ वैलक्ष्यहसितं प्रसूनमिव माधवी ॥ ४३ ॥
नैवं प्रेम नवोत्कण्ठा नवास्ते ते मनोरथाः ।
इति तस्यास्तथैवाभूदन्तरङ्गः परिच्छदैः ॥ ४४ ॥

---

१ K. reads निराक्रियते for निरस्यते. २. B. and T. read °मादधे for °मादधे, but in B. marginal correction appears °मादधे ३. B. reads वदने श्रिया and K. वदनश्रिय both for वदनश्रिया. ४. B. I. and Tr. read विश्रान्तोऽङ्गमनङ्गस्य for विश्रान्तोऽन्तरनङ्गस्य ५. Tr. reads शरं मृदूकुर्वन् for शरमृजुकुर्वन्; while T. reads शरमृजु कुर्वन् for the same. ६ B. reads सदा and K. मदा both for यदा, but in B's. marginal correction there appears यदा. ७ K. reads °त्युक्त्वा for °त्युक्ता. ८. K. reads अव्यक्तं and T. अव्यक्तः both for अव्यक्तं. ९. T. adds हि before चित्र, but it is unnecessary here १० B. reads व्रीडाविवलितं, but in the margin व्रीडार्धवलितं for व्रीडार्धवलितं while T. व्रीडार्धचलितं for the same and K. reads in the margin व्रीडाधरलितं. ११ Tr reads माधवी for माधवी and B. प्रसूनं इव for प्रसूनमिव. १२. T. reads नवं for नव through a mistake १३ B and K read तथैव for तथैव. १४. K. reads अन्तरङ्गपरच्छदः for अन्तरङ्गः परिच्छदैः.

किञ्चित्त्रपानुविद्धेन पुण्डरीकदलत्विषा ।
तमानर्चेव राजेन्दुमनिमित्तस्मितेन सा ॥ ४५ ॥
सा च दोःशायितभुवा नृपेणाङ्कयासिता हृदि ।
कृताङ्गभङ्गवलना झटित्यालस्यमाययौ ॥ ४६ ॥
तत्क्षणेनैव सा चित्रं तन्वी तन्मयतां ययौ ।
कं न प्रतारयत्येष कितवः कुसुमायुधः ॥ ४७ ॥
स्तिमितेवावतस्थे सा सारङ्गायतलोचना ।
अचेतनेव शून्येव सुप्तेवालिखितेव च ॥ ४८ ॥
स्मरेण मर्मणि क्वापि साऽविध्यत सुमध्यमा ।
अनिद्रितापि यत् साऽभूत् क्षणं मुकुलितेक्षणा ॥ ४९ ॥
व्यञ्जितानङ्गलीलेन शृङ्गाररसबन्धुना ।
तन्वी नवानुरागेण सान्यैवं घटिताभवत् ॥ ५० ॥
ऋजुनैक्षत यच्चित्रं यदभूच्च त्रपावती ।
तेनातिगूढभावापि सा सखीभिरलक्ष्यत ॥ ५१ ॥
अथानङ्गवती नाम सखी तामित्थमेवोचत ।
दशनज्योत्स्नयाऽरण्यं सुधयेव निषिञ्चती ॥ ५२ ॥
कच्चिदस्य प्रमोदाय कुमुदस्येव चक्षुषः ।
अयं मध्यगलोकेन्दुः पातालेन्दुकले तव ॥ ५३ ॥

१ T reads °नुविद्धेन for °नुविद्धेन २ Tr reads राजिनतामित° for °नानिमित° ३ I reads शायितेन for शायि ते K also the same ४ T reads ललित for कृता वी ५ B reads in the margin ययौ for ययौ ६ I reads किं (न) but corrects क ७ T I and Tr read स्तिमितैता° for स्तिमिता° ८ Tr reads सुप्त and K सुप्त both for सुप्ते ९ I reads वा for च १० K T and Tr read °लीलेन for °लीलेन ११ B reads °बन्धुना for °बन्धुना १२ T reads साऽन्यत्र for साऽन्यैवं १३ K and T read इत्थं for चित्रं १४ B reads तेनाऽपि for तेनाति° १५ K reads °रलक्ष्यत for °रलक्ष्यत १६ T reads तां सुधयाऽ for तामित्थमेवोचत १७ K reads °शीत for °दशन १८ I reads °मध्य° for °मध्य°

वनानिलाहतोन्निद्रपद्मकेसरशालिना ।
रोमोद्गम इवानेन धृतस्त्वदवलोकनात् ॥ ५४ ॥
अद्य नः सफलं चक्षुश्चित्रे यदवलोकितः ।
कन्दर्पाधिककान्तोऽयमवन्तिमृगलाञ्छनः ॥ ५५ ॥
त्वामप्यवस्थितां मन्ये यस्त्वयैतस्य वक्षसि ।
एते सविभ्रमं न्यस्ते दृशौ मुक्तालते इव ॥ ५६ ॥
जितमेतेन को ऽप्येष सत्यं कामोऽस्य किङ्करः ।
आरोहति परां कोटिमत्र यत् तव सम्भ्रमः ॥ ५७ ॥
त्वमत्र वल्लभावेव किमिन्दुमुखि लज्जसे ।
विलङ्घयत्यलङ्घ्यानि स्मरदुर्ललितानि कः ॥ ५८ ॥
कोऽन्यः सखि नृशंसो ऽस्ति कामं विषमबाणतः ।
सुकुमारे तवाप्यङ्गे येन व्यापारितः शरः ॥ ५९ ॥
बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ ६० ॥
एकेन राजहंसेन हृतो हारस्तनूदरि ।
अनेन तु द्वितीयेन लिखितेनापि ते मनः ॥ ६१ ॥
कुलत्रपा तवालीषु किञ्चिदुन्नमयाननम् ।
अहो बत त्वमेतस्मिन्नत्यायतकुतूहला ॥ ६२ ॥

---

१. B. Tr. and I. read °हतो° for °हतो°. २. B. reads °शोभिना for °शालिना and K. and Tr. °त्तुना for the same. ३. B reads °हरि for °धृत°. ४. K. reads स्थितिनैतस्य for यस्त्वयैतस्य, while B °प्यवाप्तिं for °प्यवस्थितां. ५ K. reads यन्ते for एते. ६. Tr. reads ज्ञातं for जित. ७ T. reads आरोहन्ति and सम्भ्रमाः for आरोहति and सम्भ्रम respectively. ८. K. reads °भावेन for °भावेव; while T. किमिन्दुमुखि for किमिन्दुमुखि. ९. T. reads सुखि for सखि. १०. K. reads एव for एष. ११. Tr. reads मनोहरि for तनूदरि.

एतत्कर्णोत्पल लोलमपाङ्गैरतिवेशितम् ।
त्वदुदन्तमिवैतस्य कथयत्यलिकूजितै ॥ ६३ ॥
अहो दूरस्थितेनापि हृदि स्पृष्टा नृपेन्दुना ।
इन्दुकान्तशिलेव त्वमार्द्रतामवगाहसे ॥ ६४ ॥
निपुणे नि श्वसिष्येवमतिगूढ यथा यथा ।
तथा तथा तव व्यक्तमयमुच्छ्वसिति स्मर ॥ ६५ ॥
स्मितमेतदलोलाक्षि लज्जासवलित तव ।
इद निर्जितबाल्यस्य यौवनस्योदित यश ॥ ६६ ॥
यथा तवेयमरतिर्यथा सुतनु वेपसे ।
तथा कवचित शङ्के नि शङ्क मदनस्त्वयि ॥ ६७ ॥
किमत्र करवै गाढमाकल्पकमिद तव ।
इय च मन्मथस्यास्त्र निर्गता चूतमञ्जरी ॥ ६८ ॥
सुरतश्रान्तशबरीकबरीमाल्यचुम्बिन ।
कथमेते त्वया तन्वि सह्या मलयवायव ॥ ६९ ॥
किं ताम्यसि तवोपान्तमानयाम्यधुनैव तम् ।
इत्याश्वासयतीव त्वा कोकिलोऽयं कलस्वन ॥ ७० ॥
कूजन्ती कोकिलवधूरियमाधिं धुनोति ते ।
अनङ्गनृपसाम्राज्यलीलामङ्गलगायिनी ॥ ७१ ॥

१ B reads °निवेशित I °निवेशित both for °प्रतिवेशितम् while T °प्रतिवेशिते for the same २ B and T read °कान्ति° for °कान्त° ३ T and Tr read निपुणा and h निपुण both for निपुणे ४ B reads °गूढ for °गूढे ५ I and Tr read उच्छ्वसिति for उच्छ्वसति ६ I T and Tr read °मतत्र लज्जाल for °मनवलालाक्षि ७ h reads मेत्र यश for उदितं यश ८ K reads संनिहित for कवचित ९ T reads °माकल्पक° for °माकल्पक° and Tr the same but they do not convey good sense १० T Tr and I read °सुरतश्रान्तशबरीचुम्बिन for °शबरीकबरीमाल्यचुम्बिन ११ B h T and I read यातिकर्षि वाल्लभना for यातिमाऽयं मलयवन १२ T Tr and I read विमर्दित for धुनोति १३ h reads °गायनी for °गायिनी

वनान्तदेवतावामपादन्यासोत्सवः स्फुटम् ।
एष स्तबकितोऽशोकः सुहृत् कामस्य का गतिः ॥७२॥
अत्रोर्वीतिलके दृष्टिमस्यन्तीं तिलकः क्रुधा ।
अयं तर्जयतीव त्वां वाताधूतलताङ्गुलिः ॥ ७३ ॥
पथि स्मरस्य विषमे स्खलितायामितस्त्वयि ।
स्मितच्छटेव निर्याति सिन्दुवारस्य मञ्जरी ॥ ७४ ॥
ह्रापयत्यस्तबिम्बोष्ठरुचिनिःश्वसितानि ते ।
अयं मुकुलितः किञ्चिद्बकुलो मुकुलस्तनि ॥ ७५ ॥
त्वनया कर्णिकारस्य पुरः पुष्पितया त्वया ।
अनङ्गस्यैकराज्येऽस्मिन् हेमवेत्रलतायितम् ॥ ७६ ॥
अहो न कस्य भिन्दन्ति हृदयं वीक्षिता अपि ।
निसर्गमृदवोऽप्येते[7] सहकारनवाङ्कुराः ॥ ७७ ॥
चतुरं कोकिलामेष कृत्वा कुरबको मुखे ।
दुर्लभं याचतीव त्वां लीलालिङ्गनदोहदम् ॥ ७८ ॥
अशोकस्कन्धलग्नेयं कुसुमैर्नवमाधवी ।
प्रार्थनीयमियस्वस्रां हसति त्वामिवोन्मुखाम् ॥ ७९ ॥

---

१. T reads अनान्त° for वनान्त°. २ Tr. mutilates first six letters of this line and then reads दृष्टि मुद्यन्तीं तिलक क्रुधा for दृष्टिमस्यन्तीं तिलक क्रुधा. ३ K. reads सखि for त्वयि. ४ B. reads निर्दाता for निर्याति ५ T. reads ह्रायदाति. K. शायदति and gives in the marginal reading ल्लायति for ह्रापयति, while Tr. reads ह्रायन्तदस्तबिम्बाष्ठकाञ्चि for ह्रापयत्यस्तबिम्बाष्ठरुचि° and °बिम्बोष्ट किञ्चित T. °बिम्बोष्ठ रुची and I. °बिम्बोष्ठरञ्जिन् for °बिम्बोष्ठरुचि°. ६ I reads पुन for पुर, while B T पुष्पितदा for पुष्पितया ७ T. reads °स्देव for °स्यैक°. B and K substitute हि for अपि. ८. I. reads चतुरं and Tr. चतुर both for चतुरं ९ K reads कुरबक मुख for कुरबको मुखे १० Tr. reads त्वद्दीना° for त्वा लीला°. ११ K reads °मालती for °माधवी १२ B I T. and Tr read °दमुखे for °त्वमुखाम्, while K. substitutes °त्वद्रां for त्वद्रां

भूपतावनुरक्तायास्तव सन्तापदीपनम् ।
स्थलारविन्दं सेव्यैव सूते सखि वसुन्धरा ॥ ८० ॥
त्वमीप्यङ्कस्थकन्दर्पजगद्विजयसिद्धिषु ।
दृष्टिरुद्विजते तन्वि पाटलाकुड्मलेषु ते ॥ ८१ ॥
सुन्दरि द्वितयस्यात्र कार्शिमा भूषणायते ।
राजन्यासङ्गभावायास्तव रात्रेश्च सम्प्रति ॥ ८२ ॥
एष चैत्रोत्सवश्चित्रे नृपोऽयं नूतनं वयः ।
प्राप्तावकाशः कामोऽपि पतिताऽस्यतिसङ्कटे ॥ ८३ ॥
किमालिखितवत्येषा चित्रे माल्यवती नृपम् ।
द्वारीकृतेयमथ वा वामेन विधिना तव ॥ ८४ ॥
बहुना किं चकोराक्षि छलितासि मनोभुवा ।
सर्वथा ते करिष्यन्ति कुशलं कुलदेवताः ॥ ८५ ॥
इत्यादि व्याहरन्ती सा कृतभ्रूभङ्गया तया ।
नरेन्द्रबाणपुङ्खेन कुचे किञ्चिदतुद्यत ॥ ८६ ॥

कलावतीवचनम् ।

अथ किन्नरराजेन्द्रकन्या नाम्ना कलावती ।
एवं वचः स्मितसुधानिषिक्ताक्षरमाददे ॥ ८७ ॥

---

१ T and Tr interchange places of सूते and सखि, while T mutilates the letter ते after सू २ B reads कुम्भेषु but gives to the margin कुड्मलेषु for कुड्मलेषु ३ T. omits this whole line —

सुन्दरि द्वितयस्यात्र कार्शिमा भूषणायते ।

४ Tr and I read भासयायते for भूषणायते ५ B reads राजन्य° for राजन्या°, but gives marginal reading राजन्या°, while I reads रजन्या° for the same, but it is to be supposed by a mark on the top of र that it is रा ६ T. reads चैत्राङ्कन for चैत्रोत्सव, while K चैत्रोत्सव for the same ७ T reads प्रांत for °प्राप्त°. ८ B reads द्वारे कृते° and T द्वारीकृत° both for द्वारीकृत° ९ T. reads भर्त्सितासि and Tr चलितासि both for छलितासि १० T. reads सर्वथा for सर्वथा ११ B and K read कमलदृशा for कुलदेवता १२ T. I and Tr read °भङ्गया for भङ्गया १३ I and Tr read °सुदाय for °सुदाय १४ T reads आदद for आददे

कामं दुर्लभमेवैतच्चैत्रचन्द्राङ्किता निशा ।
प्रेयान्विपञ्चीरणितं पञ्चबाणाङ्कितं वयः ॥ ८८ ॥
अयि त्वां स्नापयत्येष कालः कमललोचने ।
जगदानन्दजनकः सुधासूतिरिवाब्जिनीम् ॥ ८९ ॥
स्थाने तवानुरागोऽयमनङ्गस्यायमुत्सवः ।
सखि खिद्यति निर्व्याजमिन्दाविव कुमुद्वती ॥ ९० ॥
नृपस्यारण्यसञ्चारः श्रमेणानेन सूच्यते ।
मरुता द्विरदस्येव मदनिष्यन्दगन्धिना ॥ ९१ ॥
अवश्य तन्वि चिन्वाना वने हंसमितस्ततः ।
कंचिद्विलोकयिष्यन्ति तं त्वत्परिजनस्त्रियः ॥ ९२ ॥
ज्ञातस्त्वद्विरहार्तैर्वात्र नं चेद्रक्ष्यति पाटला ।
ततोऽस्य षट्पदस्येव लताचेतो हरिष्यति ॥ ९३ ॥
स्थिरा भव नृपेण त्वमिह संयोगमाप्स्यसि ।
यथा कण्वाश्रमे पूर्वं दुष्यन्तेन शकुन्तला ॥ ९४ ॥
इति तद्वचसः सोऽपि मसृणोत्कम्पितस्तनी ।
व्याजमाचीकृतमुखं निशश्वास शशिप्रभा ॥ ९५ ॥
वनश्रीरणन्मञ्जीरो लताकुञ्जोदरे ततः ।
चुकूज मत्तकण्ठस्तां दक्षिणेन कपिञ्जलः ॥ ९६ ॥

1 T and Tr read चैत्रचन्द्राङ्किता for चैत्रचन्द्राङ्किता 2 Tr reads पञ्चबाणाश्रितं and T and I पञ्चबाणार्चितं both for पञ्चबाणाङ्कितं 3 T. reads अयि नु स्नापयति for अयि त्वां स्नापयति, while I reads त्वा for त्वां 4 Tr reads खिद्यति निर्व्याजमिन्द्राविव for खिद्यति निर्व्याजमिन्दाविव, while T reads °मिन्दाव च for °मिन्दाविव through mistake 5 I reads °निष्पन्द° for °निष्यन्द° 6 B reads °श्रासं for हंस and K reads हंस, but in the margin reads वश 7 K reads कस्य for कंचित् 8 T reads °त्वद्विरहार्तो ऽत्र (?) Tr त्वद्विरहार्तो वात्र and L त्वद्विरहार्तो वात्र all for °त्वद्विरहार्तैर्वात्र 9 K reads भ्रस्यति for भास्यति 10 Tr reads °पुरगी for °सु 11 I reads मञ्जु° for मत्त° and T म for मं

हर्षाश्रुलवकीर्णेन सत्पत्रावलिचारुणा ।
वामेन पस्फुरे तस्याश्चक्षुषा च स्तनेन च ॥ ९७ ॥
अत्रान्तरे समायान्ती ददृशे दूरतस्तया ।
नरेन्द्रसवितुस्तस्य पुरः सन्ध्येव पाटला ॥ ९८ ॥
तस्यास्त्वये च त्रितयमपश्यत्फणिकन्यका ।
मुखे स्मितं करे हारं सितमंसे च चामरम् ॥ ९९ ॥
सा[6] हारहस्ता रुरुचे धूतस्तिमितचामरा ।
सरसी सुप्तहंसेव फेनाढ्यासितपङ्कजा ॥ १०० ॥
दृष्टिः फणीन्द्रदुहितुरतिक्रम्यैव पाटलाम् ।
भृङ्गश्रेणिरिवाशोके पपातावन्तिभर्तरि ॥ १०१ ॥
प्रियं नेः सोऽयमायाति पश्य पश्य शशिप्रभे ।
परमारान्वयोदारहारमध्यमणिर्नृपः ॥ १०२ ॥
इति प्रियसखीसूक्तिसुधानिष्यन्दलेखया ।
सिक्ते तदाऽभवत्तस्याः स्मरः पल्लवितो हृदि ॥ १०३ ॥

सैन्दानितकम्[13] ।

सुधारस इवोर्वीभृत्तया सम्मुखमापतन् ।
दृशा स्फटिकशुक्त्येव वारंवारमपीयत ॥ १०४ ॥

---

१ T. reads °लावकीर्णेन for °लवकीर्णेन २ T, Tr and I read पुस्फुरे for पस्फुरे ३ Tr. reads ऽथ for च ४ T reads तत for तया ५ I reads °कन्यका for °कन्यका ६ B. reads स° for सा but gives in the margin सा, while T. reads सा हारस्ता विरुचे for सा हारहस्ता रुरुचे ७ Tr mutilates two letters before स्तिमित ८ Tr reads सरसीव लसद्धसा for सरसी सुप्तहंसेव ९ K reads मीनाध्यासित° for फेनाध्यासित°, but gives marginal reading फेनाविसम्न° १० B and K. read °क्राम्येव for °क्रम्यैव ११ B reads प्रियो य and in the margin प्रिया य for प्रिय न, while K प्रियस्ते for the same १२ T, Tr and I read °सूक्त° for °सूक्ति°, while I. substitutes °विष्यन्द° for °निष्यन्द°. १३ T. and Tr do not insert this १४ K. reads निभृत मपीयत for वारंवारमपीयत

वितेने ऽप्यंहिकन्याभिः कौतुकेनातनीयसा ।
तस्याग्रे राजहंसस्य नेत्रेन्दीवरवागुरा ॥ १०५ ॥
अवन्तितिलकोदन्तमुपसृत्याथ पाटला ।
अनङ्गदीपन तस्यै जगादेङ्गितवेदिनी ॥ १०६ ॥
देव पश्चात्स्थितो ऽप्यग्रे भातः पर्युत्सुको भवान् ।
इत्यभाष्यत भूपालश्चित्रे चतुरया तया ॥ १०७ ॥
अभूत् पर्याकुला सा च मुहूर्तमसितेक्षणा ।
पश्चादलज्जतालीभिस्तथा सस्मितमीक्षिता ॥१०८॥
तस्यै हारं मन्त्रीभर्तुर्गर्पयामास पाटला ।
आकृष्य मूर्तमानीतमतिशुद्धमिवागयम् ॥ १०९ ॥
सखीनामनुरोधेन सा किलानन्द्रमोहिता ।
हृदि दीर्घगुणं दध्रे हारं प्रियमिवापरम् ॥ ११० ॥
तुषारपाण्डुना तेन वबृधेऽस्या मनोभवः ।
दिगन्तवान्तज्योत्स्नेन मह्रोदधिरिवेन्दुना ॥ १११ ॥
पुष्पोद्गमेनेव लता प्रसादेनेव भारती ।
सा तेन रेजे हारेण यशसेव नरेन्द्रता ॥ ११२ ॥

---

१ T substitutes °भि° for °हि° २ T reads नेन्द्रलीवरया गुरा (?) for नेत्रेन्दीवरवागुरा ३ B reads °सृत्या° for °सत्या°. ४ K reads °दीपने नम्या for °दीपन तस्यै ५ K reads पर्याकुल कथम् for पर्युत्सुको भवान् ६ T. reads इत्याभाष्यत for इत्यभाष्यत , while Tr mutilates two letters before चतुरया ७ Tr reads °लिम्नु तया for °लिभिस्तया ८ K reads सम्मित° for सस्मित° ९ k and Tr read कस्य for तस्यै १० B reads आकृष्य मूर्तमायात°, k आकृष्यपूर्णमायात° and Tr आकृष्यमुक्तमानीत° all for आकृष्य मूर्तमानीत°, while Tr substitutes °शुभ्र° for °शुद्ध°. ११ B reads °मुग° for °मनु° १२ K. reads प्रियमित्रागनम् for प्रियमिवापरम् and substitutes हृदा for हृदि १३ K reads दिगन्ताश्रित° for दिगन्तवान्त°. १४ K reads पुन्ताद्गमनेव for पुष्पोद्गमेनेव , while चवरी for भारती

ततश्शिथिलपर्यस्तविलोलकबरीलता ।
केतुयष्टिरिव श्यामपताकाढ्या हिरण्मयी ॥ ११३ ॥
वसंतकमलोल्लासिमत्तभ्रमरनिःस्वना ।
दीपमानोपदेशेव स्वरहस्ये मनोभुवः ॥ ११४ ॥
उल्लसत्कुटजाच्छाच्छविलासहसितच्छविः ।
झटित्युदधिवेलेव निर्गच्छदमृतच्छटा ॥ ११५ ॥
सरोजिनीव हंसीभिर्भृङ्गीभिरिव मालती ।
शशिलेखेव ताराभिस्सखीभिरभितो वृता ॥ ११६ ॥
दृष्ट्वा नरेन्द्रमायान्तमुदस्थादुत्सुकाथ सा ।
दधती नूतनप्रेमपरिणीतामधीरताम् ॥ ११७ ॥

कुलकम् ।

अथ सुतनुरलोलतारके सा सुचिरमुदञ्चितदीर्घपक्ष्ममाले ।
शशिन इव नवोद्गतस्य दूरात् अवनिपतेःपथि लोचने मुमोच॥११८॥

आसन्नानुचरधृतेन पङ्कजिन्याः
पत्रेण स्फुटघटितातपत्रलीलः ।
स च्छायामथ महसा हसन्हिमांशोः
क्ष्मापालः पुलिनमवाप नर्मदायाः ॥ ११९ ॥

इति श्रीमृगाङ्कसूनोः परिमलापरनाम्नःपद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभादर्शनो नाम षष्ठः सर्गःसमाप्तः॥६॥

---

१. K. reads 'रिवाभूत सा for °रिव श्याम° २. B T. and I read वतस° for वसंत°, while Tr reads °कमलोल्लास for °कमलोल्लासि. ३. K. and Tr. read सरहस्य° for स्वरहस्ये. ४ B. and I. read उच्छलत्°, T and Tr. उचलत् for उल्लसत्°, while T. is quite mistaken here ५ T. reads धृता for वृता ६. Tr and I real द्रष्टु and T. द्रष्टु for दृष्ट्वा. ७ T, Tr. and I. do not insert कुलकम्. ८. K. reads पक्ष्मलेखे for पक्ष्ममाले ९. B. reads सच्छायापथ° and Tr सज्जायामथ for स छायामथ ; while Tr substitutes सहसा for महसा १०. B reads षष्ठ सर्ग for the whole colophon. T. इति परिमलापरनाम्नो महाकवेः कालिदासस्य कृतौ साहसाङ्कचरिते पञ्चमः सर्ग , Tr reads इति परिमलस्य कृतौ नवसाहसाङ्कचरिते नरेन्द्रदर्शनो नाम षष्ठ सर्गः. I. reads the same, but omits कृतौ and नाम.

## अथ सप्तमः सर्गः ।

शशिप्रभादर्शनम् ।

ततः स दूरादहिराजकन्यकां
जनैकमित्रेण युतां पतत्त्रिणा ।
विशाम्पतिर्दीर्घगुणानुषङ्गिणीम्
अनङ्गकोदण्डलतामिवैक्षत ॥ १ ॥

उपोढलावण्यतरङ्गभङ्गया
सरागबिम्बोष्ठगलत्प्रवालया ।
अहारि लोलं नृपतेस्तया बलात्
अनङ्गरत्नाकरवेलया मनः ॥ २ ॥

रमाङ्गदकृतं शशिप्रभावर्णनम् ।

सविस्मयो लोचनमार्गमागया
तया स पातालतलेन्दुलेखया ।
अथेत्थमम्लानमनोरथोद्गमो
रमाङ्गदेनाभिदधे नराधिपः ॥ ३ ॥

अवैमि सेवेयममोघमायुधं
मनोभुवः पन्नगराजकन्यका ।
उदंशुलेखेन मुखेन कुर्वती
जगत् विलीनेन्दुविलोकनस्पृहम् ॥ ४ ॥

---

१ T. reads अथक for अनैक २ Tr reads स्वपत्त्रिणा for पतत्त्रिणा ३ B. reads °वैदग्ध for °वैक्षत ४ I reads सुराग° for सराग°. ५ K. reads सधार for लोलं. ६ B reads सविस्मयालोकन° for सविस्मयो लोचन° and reads in the margin ख for क ७ h reads °तलेन्द्रकन्यया for °तलेन्दुलेखया ८ B reads सदंशु° for उदंशु°. ९ h and Tr read निलीनेन्दु° for विलीनेन्दु°

11

नरेन्द्र सत्यं स कुतूहली भवेद्
अलौकिकं रूपमवेक्षितुं रतेः ।
इयं न यस्यातिथितां गता दृशोर्
अगाधलावण्यसरित् सुमध्यमा ॥ ५ ॥

इयं सुधा मुग्धविलासजन्मभूर्
इयंभुजङ्गालयरत्नदीपिका ।
इयं जगन्नेत्रचकोरचन्द्रिका
पुरःपताकेयमयुग्मपत्रिणः ॥ ६ ॥

इयत्तया मुक्तमवैमि नैपुणं
प्रजापतेरद्भुतशिल्पकर्मणि ।
नृपोपमानामुपमानतां गतं
विनिर्मितं येन हि रत्नमीदृशम् ॥ ७ ॥

इयं तवानेन विराजतेतराम्
करस्थितेनावनिपालपत्रिणा ।
उपेयुषा काञ्चनपद्ममंशुना
हिमेशरांशोरिव जन्हुकन्यका ॥ ८ ॥

अस्यैव श्लोकस्य पाठान्तरम् ।

---

१. B reads मादृक स for सत्य स and T. substitutes न for स २ K. reads सुधारसा for सुमध्यमा ३ B. and K. read °सिक्त° for °मुग्ध°; while Tr. mutilates the following —

इय सुधामुग्धविलासजन्म 1.

४. K. reads भुजङ्गाङ्गण° for भुजङ्गालय°. ५. B. reads सुक्त, T. शुक्त and K सूक्त all for मुक्त; while Tr. इयत न मा सुक्त for इयत्तया मुक्त. ६. Tr. reads °रूप° for °शिल्प° ७ K. reads नृपोपमानां for नृपोपमाना. ८. T reads मेन for येन. ९ Tr. reads उप ---का° for उपेयुषा का°. १० Tr. reads हिमे--श° for हिमेश°. * This does not appear in any manuscript except K.

अरालकेशीयमनेन भाति ते
शरेण कार्तस्वरपुङ्खशोभिना ।
निसर्गगौरेण नरेन्द्ररश्मिना
सकज्जला दीपशिखेव शार्वरी ॥ ९ ॥

इयं विलासोर्मिनिमग्नशैशवं
विभाव्यमानस्तनकुड्मलोद्गमम् ।
मदैकविस्रम्भगृहं विगाहते
वयो विभक्ताङ्गमनङ्गदोहदम् ॥ १० ॥

इयं नताङ्गी जगदेकसुन्दरे
निदर्शिते पाटलया नृप त्वयि ।
दृशौ नवेन्दीवरपत्रपेशले
विमुञ्चति श्रीरिव शार्ङ्गधन्वनि ॥ ११ ॥

अनङ्गसाम्राज्यविलासचामरे
वनानिलव्याकुलितेंऽसचुम्बिनि ।
परिस्खलत्ये संयमनार्थमेतया
सलीलमस्तः कबरीभरे करः ॥ १२ ॥

---

१ K. reads मराल° for अराल°. This stanza is another reading of the preceding one and is of the author himself. २ T. reads °रोरेण for °गौरेण and K. °शुभ्रेण for the same ३ B. and I. read शर्वरी for शार्वरी After this stanza Tr. gives the following :—

॥ अथ प्रभावानन्तरम् ॥

and I inserts:— अथ पाठान्तरम् ॥

४ K. reads विविक्ताङ्ग° for विभक्ताङ्ग° and T. °सौहृदम् for °दोहदम्. ५ I. and T. read °सुन्दर, B. and K. °सुन्दरी for °सुन्दरे. ६ K. reads निदर्शिते for निदर्शिते ७ K. reads पेशल for पेशले, while T. °धन्वना for °धन्वनि. ८ T reads व्याकुलितांस° for व्याकुलितेंऽस° I also reads the same, but corrects व्याकुलितांस° for व्याकुलितेस°

विलोकयन्ती कुसुमं कचाग्रतश्
च्युतं कुचस्पर्शधियेव वक्षसि ।
इयं कृशाङ्गी कुसुमास्त्रशङ्कया
कृतप्रणामेव तवावलोक्यते ॥ १३ ॥

विलोकयास्याः क्षितिपाल बिभ्रतीं
प्रदीपशोभां कबरीं निशामुखे ।
अमी मुहुः कुङ्कुमकेसरारुणा
लसन्ति सीमन्तमणेर्मरीचयः ॥ १४ ॥

विराजतेऽस्यास्तिलकोऽयमञ्चितो
विकुञ्चितभ्रूलतिकान्तरे नृप ।
विजित्य लोकद्वितयं दिवं प्रति
स्मरेण बाणो धनुषीव संहितः ॥ १५ ॥

अपाङ्गसंवर्धितशोणकान्तिना
सुकृष्णतारेण तुषारपाण्डुना ।
इयं प्रवालासितरत्नमौक्तिकैर्
विनिर्मितेनेव चकास्ति चक्षुषा ॥ १६ ॥

इयं पुरो निर्यतिदूरमायते
कपोलतः काञ्चनकुण्डलार्चिषि ।

---

१. T. reads °च्युत for च्युतं°. २. Tr. reads अस्य for अस्या. ३. Except K. all read बिभ्रतः for बिभ्रतीं ४. Tr. reads कबरीं निशामुखे for कबरीनिशामुखे and I. also reads the same ५. From the word अमी up to the end of this canto, the complete 8th, and the 9th cantoes, and the first 38 stanzas of the 10th canto, and of the 39th stanza up to वनायमानैर्धातिविटपाम्. The intermediate portion is lost in B.; while T. substitutes अमू for अमी. ६. T. reads विराजते for विराजतें. ७. Tr. reads विमुञ्चति for विकुञ्चित°. ८. K. reads संनिहित for संहित ९. I. reads °संवर्णित°, T. °संवर्धित°, and Tr. °संवर्तित° all for °संवर्धित°. १० T. reads प्रवालैः सितरत्न° for प्रवालासितरत्न°. ११ T. reads °कुण्डलार्चिषा for °कुण्डलार्चिषि; while in I. on the top of षि there appears a star-like mark, and it may be a reading of षि.

इयं रुषेव प्रतिमोक्तुमुद्यता
मनोभुवे मुक्तशिलीमुखे हृदि ॥ १७ ॥

इयं त्रियामापतिकान्तिपेशलं
विद्युद्द्वन्धूककलाधिकत्विषा ।
बिभर्ति बिम्बाधरमुद्रया मुखं
मनोभिरामं रजनीव सन्ध्यया ॥ १८ ॥

उपोढतारापतितारहारयोर्
इयं युगेन स्तनयोर्विराजते ।
द्वयेन देवोर्मिमि चक्रवाकयोम्
सरिद्वहतिकमृणालयोरिव ॥ १९ ॥

सुरापगावीचिविपाण्डुरेप ते
चिरेण हारश्चरितार्थतां गतः ।
धृतः क्षितीश प्रणयार्द्रयाऽनया
सलीलमुत्कम्पिनि यत्कुचद्वये ॥ २० ॥

इयं महीपाल विलोकितेन ते
विगाहते कान्तमिदं दशान्तरम् ।
भवत्यनारूढविकासविभ्रमा
किमुद्गमे चन्द्रमसः कुमुद्वती ॥ २१ ॥

---

१. T reads इम and K. इय for इय. २ I. reads मनोनवे for मनोभुवे; while Tr. reads मनोभुवा and corrects मनोनवे. ३. Tr. reads विमुक्त° for विद्रुद्द°. ४. Tr. reads °ताराधिप° for °तारापति°. ५ In. I the letter ता is visible, but it seems that the corrector has made it था ६. T. has विसस्युने for विराजते, but it seems quite meaningless. ७ K. reads काम्यो° for देवो°. ८. The original reading of Tr is not recognizable. The corrector reads °फेन for °वीचि°, while T. reads स्मरापगा for सुरापगा. ९. K. and T. read चारितार्थता for चरितार्थतां. १० Tr. reads गहेल° for सलील°. ११ The MS. Tr mutilates first ten letters in this line. १२. T. reads विभ्रमान किमुद्गमे चन्द्रकुमुद्वतीव for विभ्रमा किमुद्गमे चन्द्रमसः कुमुद्वती

किमन्यदुक्तं सुधयेव सान्द्रया
तदन्यथा नाथ न पाटलावचः ।
स्फुटेयमस्याः कुरुते यदङ्गके
बलात्परिष्वङ्गमनङ्गविक्रिया ॥ २२ ॥

शशिप्रभासमीपगमनम् ।

इतीङ्गितज्ञे वदति प्रियंवदे
रमाङ्गदेन स्मितमुद्रतस्मितः ।
अवाप पर्यासशशाङ्कदर्शनः
फणीन्द्रकन्यासविधं नराधिपः ॥ २३ ॥

नायिकाचेष्टाः ।

उवाह लज्जानतमञ्चितालकं
ततो भुजङ्गाधिपतेः सुतामुखम् ।
अवाञ्चितं किञ्चन मातरिश्वना
सपट्पदं पद्ममिवारविन्दिनी ॥ २४ ॥

पतत्यधः कुङ्कुमपङ्कपाटले
मयूखलेखापटले शिखामणेः ।
ह्रियेव रक्तांशुकपल्लवस्तया
पिधातुमालिर्व्यनृपे न्यधीयत ॥ २५ ॥

१ In Tr this stanza appears as follows —

किमन्यदु – – इतन्यथानया
न पाटलाया स्फुटेय – – – ।
– – – – – – – – – – – – – – –
– – – – – ङ्गमनङ्गविक्रिया ॥ २१ ॥

२ T reads °मुक्त for °दुक्त ३ K reads स्याद्यहि पाटलायच्च for नाथ न पाटलावच ४ K reads °स्मिते for °स्मित ५ T. reads पर्यन्त° for पर्यास° ६ K. reads सविधे धराधिपः for सविधं नराधिपः ७ T reads विधातु° for पिधातु° ८ T reads नृपं for नृपे and T नृप न्यधीयत for नृपे न्यधीयत

नृपस्य चित्रे मधुरेयमाकृतिर्[1]
न भिद्यते चन्द्रमसो यथाम्भसि ।
सखीजनस्तामिति नर्मपेशलम्
अनेकपानम्रमुखीमभाषत ॥ २६ ॥

यथास्मि वक्तासि[2] तथास्य भूपतेर्
यदा[3] पुनः कर्णसमीपमाप्स्यसि[4] ।
इतीव निर्व्याजमुदीर्य तत्यजे
तयायताक्ष्या स नरेन्द्रसायकः ॥ २७ ॥

अलं क्रियैवं समुपेक्ष्य[5] गृह्यताम्
अयं हि पाणिग्रहणोचितस्तव ।
इतीरयन्त्याः[6] कुटिलं वचः करात्
अनङ्गवत्याः कमलं जहार सा[7] ॥ २८ ॥

अथ स्वबिम्बाधरपाटलच्छदं
करेण[8] तत्तत्सदृशेन बिभ्रती ।
निवेदितुं भूपतिमभ्युपागता
रमेव राजीवमुखी रराज सा ॥ २९ ॥

---

१ Tr reads मम केय° for मधुरेय°. २ I reads वक्तासि for वक्तासि. ३ Tr reads यथा for यदा ४ K. and T. read कण्ठ° for कर्ण°. ५ K. reads समुदीक्ष्य for समुपेक्ष्य ६ I. reads इतीरयन्त्या for इतीरयन्त्या ७ T. reads इ for सा and K. सन् for the same ८ I. originally omits the following portion which it gives in the correction —

करेण तं तरसदृशेन बिभ्रती ।
निवेदितुं भूपतिमभ्युपागता
रमेव राजीवमुखी रराज सा ॥२८॥
इत्यन्तरस्तरविचारयोदिता
सा * * * * * * * *

दृशस्ततस्तत्परिवारयोषितां
नेत्राञ्जनश्यामलपक्ष्मराजयः ।
शशिप्रभे भूमिपतौ सकौतुकास्
समापतन्कुन्द इवालिपङ्क्तयः ॥ २० ॥

नृपार्हणम् ।

निपीयमानस्य तया शनैः शनैर्
अपाङ्गसञ्चारितदीर्घनेत्रया ।
उपात्तपुष्पः क्षितिभर्तुरर्हणां
चकार तस्याश्चतुरस्सखीजनः ॥ २१ ॥

पुरः शिरस्याहितमन्मथाज्ञया
तया कटाक्षैः कुटजैरिवार्चितः ।
नृपस्सपर्यां पुनरुक्तसंविदां
स तद्वयस्यानिहितामन्यत ॥ २२ ॥

सरागवस्त्युत्कलिकाभिराकुले
मृदुन्यलं पाटलया समर्पिते ।
अथ न्यषीदन्नवपल्लवासने
फणीन्द्रकन्यामनसीव पार्थिवः ॥ २३ ॥

अनुक्षितीशं नलिनीदलासने
कयाचिदेस्ते परिवारयोषिता ।

---

१. T. reads राजत्र° for नवाञ्जन, but it seems meaningless and omits one letter in this line २ K reads राजय for पङ्क्तय ३. K. reads पुनः for पुर.. ४ I. and T. read सन्निधा for संविदा, while I substitutes पुर° for पुन° and Tr mutilates six letters before दां ५. T. reads सयस्यापिहितामन्यत for तद्वयस्यानिहितामन्यत. ६. In I original reading is मृदुन्यल, but the corrector has made it ममन्यलं ७. K. reads समार्पिते for समर्पिते. ८. K. and Tr. read भूपति for पार्थिवः. ९. T. reads °दलानने. for °दलासने. १० In Tr. there appears a correction कयापि स्ते for कयाचिदस्ते; while T °दास्ते for °दस्ते ११. I. and Tr read ऽप्यविशास्योषिता for परिवारयोषिता.

रमाङ्कदोऽस्यासनबन्धमाददे
वसुन्धरायां विनयैकबन्धुरः ॥ २४ ॥

श्रमानुरोधादुपविश्यतामितः
क्षणं कृशोङ्गीति सखीभिरर्थिता।
उपाविशद्देपिनवामनस्तनी
ततस्समं ताभिरहीन्द्रकन्यका ॥ २५ ॥

नायिकाविलसितानि।

विवर्तयन्ती वदनेन्दुमण्डलं
विशालनेत्रान्तनिषक्ततारकम्।
द्वयेन सा कृष्यत सुन्दरी समं
ह्रिया नृपालोकनकौतुकेन च ॥ २६ ॥

अथावतंसीकृतलोचनोत्पलं
कपोलदोलायितरत्नकुण्डलम्।
चिरं पपौ स स्तिमितेन चक्षुषा
तदाननं मालवमीनकेतनः ॥ २७ ॥

कृती दृशाऽस्यास्सुदृशः पिबत्ययं
कपोललावण्यसुधां नराधिपः।

---

१. K. reads °बन्धन° for °बन्धुर. २. K. reads भात्मा° T. अमा° both for श्रमा°. ३. T. reads क्षताङ्गी° for कृशाङ्गी°. ४ Tr. mutilates two letters after उपाविश° and reads °वामनस्तनी, it may be उपाविशद्गात्रनवामनस्तनी. ५. Tr. reads समानाभि for समं ताभि. ६. T. reads विघूर्णयन्ती for विवर्तयन्ति ७. I. reads °निविष्टतारका and T. °विपन्नतारका both for °निषक्ततारकम्. ८. Tr. mutilates first two letters and corrector inserts for them भये°. ९ K. reads द्वयो for समं १०. I. and T. read 'हेम' for 'रत्न'. ११ I. reads ददर्श स्तिमितेन, T. ददर्शस्तिमितेन and K. ददर्शान्तिमितेन all for पपौ स स्तिमितेन. १२ K. reads °वारणध्वजः for °मीनकेतन

मिथस्सखीनामिति सस्मितं वचो
निशम्य सोऽभूदधिकाधिकत्रपा ॥ ३८ ॥
मनागिवांसादपवर्तिताननां
निरीक्ष्य तं भूपतिमर्पितेक्षणम् ।
विहस्य लज्जामुकुले चकर्ष सा
बलादपाङ्गप्रसृते विलोचने ॥ ३९ ॥
यशोभटे रूपमवन्तिशासितुः
कृतस्मिते चित्रगतं प्रशंसति ।
करस्थितं सा झटिति न्यधात्ततश्
शिलातले तामरसं त्रपावती ॥ ४० ॥
निकाममुक्तं सुकुमारमङ्गना
विलासिनस्तस्य जहार सा मनः ।
स्मरैकदूतीसहकारशाखिनो
लसन्मधावन्यभृतेव पल्लवम् ॥ ४१ ॥
तदीयमुद्दामरसोर्मिनिर्भरं
स राजहंसोऽपि विवेश मानसम् ।
कृतप्रवेशश्च सलीलमच्छिनन्
मनाङ् मृणालोमिव धीरतामतः ॥ ४२ ॥

१ After सा, 7 letters are mutilated in Tr. and then it gives सा. So the reading is difficult to form २. T. reads विहस्य, but gives in the margin प्रसह्य. ३. T reads ऽय° for च° and Tr. in the margin जहार for चकर्ष. The original reading of Tr. is difficult to find out. ४ T reads °कृत for गतं. ५ I. reads झगिति and T. अगिति for झटिति ६ T. mutilates one letter after तामर and K. reads त्रपाकुला for त्रपावती. ७ T. reads मधौ लसत्यन्यभृतेव and Tr लसन्मधा – – भृतेव, but the corrector substitutes two letters धाङ्क in the blank space. ८ T. substitutes °श्च सलीलमग्रजनं for °श्च सलीलमच्छिनत्, ९. Tr. reads मनाङ्क for मनाङ्. १०. I. omits मि and substitutes मन. for मत .

क्षणादपाङ्गस्तिमितायताक्षयोस्
सकम्पयो कण्टकिताङ्गलेखयो ।
अवापदन्योऽन्यनिरूढभावयोस्
तयो प्ररोह हृदि बालमन्मथ ॥ ४३ ॥

नायकस्य नायिकाप्रयुक्ति ।

असूययेवाथ विमुञ्चती दृश
सखीषु सा सूत्रितनर्मसूक्तिषु ।
इति स्मितक्षालितदन्तवाससा
नृपेण नागेन्द्रसुताभ्यधायत ॥ ४४ ॥

वदानवद्याङ्गि सखीजनादृत
किमेव नाम व्यतिरिच्यते जन ।
विहाय विस्रम्भविशेषमेतया
यदङ्गमन्तर्विशतीव लज्जया ॥ ४५ ॥

सदा सदाचारपरेति वार्तया
वय हृता पन्नगराजपुत्रि ते ।
अत किमेव प्रतिपत्तिमूढता
विगाहसे ऽस्मासु विमुच्यतामियम् ॥ ४६ ॥

---

१ h reads °रिङ्गया for °लज्जया २ Tr mutilates the following lines —
अवापदन्याऽन्यनिरूढभावयास् ।
तया – – – – – ॥
३ K reads प्रकर्ष for प्ररोह ४ Tr reads साधुक्ति° for सा सूत्रित° ५ K reads भार्गीन्द्र for नागेन्द्र and °पद्यत for °धायत ६ h reads वदा° for वदा° ७ L reads °मङ्ग विशसीव and T °मन्तर्विशसीव for °मन्तर्विशतीव ८ h reads हृता for हृता ९ Tr reads विगाहत for विगाहसे and T ऽसासु for ऽस्मासु

अनेन ते सुन्दरि दर्शनेन वा
कृतोपचारोऽस्मि कियत् कदर्थ्यसे ।
न वीक्षते वल्गु न मञ्जु भाषते
गता क्वचिल्लोचनवर्त्ममालती ॥ ४७॥

अधःकृतास्सत्यमधीरलोचने
रसातलेन त्रिदिवस्य भूमयः ।
अनङ्गदुर्वारशराधिदैवतं
भवद्विधं रत्नमवाप्यते ऽत्र यत् ॥ ४८ ॥

कुतूहलाध्यासितमध्यलोकया
त्वया मुहूर्तं फणिलोककौमुदि ।
अवैमि पातालमवाप्तसन्धिना
विलङ्घ्यते सन्तमसेन सम्प्रति ॥ ४९ ॥

इदं मृणालादपि कोमलं वपुस्
तवैष दूरादरविन्दिनीपतिः ।
पुनः पुनः संस्पृशतीव कौतुकात्
तमालगुल्मान्तरपातिभिः करैः ॥ ५० ॥

अनेन ते सश्रमवारिबिन्दुना
नवीनपीयूषतुषारदन्तुरः ।

---

१ K. reads ऽसि and कदर्थसे for ऽस्मि and कदर्थ्यसे respectively.
२ T. reads वीक्षसे for वीक्षते, while K. reads this half as follows:—

न वीक्षते वल्गु न मञ्जु भाषते
गता क मे लोचनवर्त्मवल्लरी ॥

३ K. reads मुहूर्ते for भवद्विधं ४ K. reads विमुग्धं and T. विमुग्धं both for मुहूर्तं ५ K. reads कौमुदी for कौमुदि ६ T. reads दिव्यते for सम्प्रति ७ T. reads नवाम्बु॰ for सश्रम॰ ८ K. reads ॰फेन॰ for ॰तुषार॰.

गिरीशमूर्द्धि तुषारपाण्डुना
कपोलबिम्बेन विडम्ब्यते शशी ॥ ५१ ॥

इदं यदाशिक्षत कैतवं कुतस्
तवैष मुग्धे सरलाङ्गुलिः करः ।
इहैतदालिख्य शिलातले शनैर्
अनेन लीलाकमलं यदुज्झितम् ॥ ५२ ॥

न चित्रमेवं क्वचिदस्ति भूतले
ममात्र तेनास्ति कुतूहलं महत् ।
अतः किमेतत् पिहितं प्रकाश्यताम्
अहेतुकस्तन्वि क एष मत्सरः ॥ ५३ ॥

अदृश्यमेतद्यदि मन्यसे ततः
किमर्थ्यसे किं त्वियदेव शंस नः ।
कृती त्वयायं भुजगाम्बरौकसाम्
अलेखि चित्रे कतमः कृशोदरि ॥ ५४ ॥

लतेव सम्मीलितषट्पदस्वना
कियच्चिरं निर्वचनैव तिष्ठसि ।
इतश्चकोराक्षि विचिन्त्य सूनृतं
ममोत्तरं किञ्चन दातुमर्हसि ॥ ५५ ॥

---

१. T. reads अचिन्तितचैतव for अशिक्षत कैतवं, while Tr. substitutes वना° for वदा°. २. T. reads °र्पितम् for °दुज्झितम्. ३. I. reads अनि° and T. अस्तु. Loth for अस्ति. ४. K. reads त्वया for अत. ५. K. reads अहेतुको मन्यसेव for अहेतुकस्तन्वि क एष. ६. K. reads नन्वियमेव for किन्त्वियदेव ७ I reads निर्वचना° and T. निर्वचसा° for निर्वचनै°. ८. Tr reads किञ्चितु for किञ्चन.

येथातिजिह्वेऽपि यथातिवेपसे
यथा कपोले पुलकं बिभर्षि च ।
तथाऽत्र मन्ये तव पक्षपातवन्
नितान्तमन्तःकरणं कृशोदरि ॥ ५६ ॥

ह्रिये तवेयं यदि कल्पते कथा
किमेतया नः प्रकृते येतामहे ।
यदर्थमेते वयमागताः स्वयं
स नार्थ्यते किं करभोरु सायकः ॥ ५७ ॥

सलीलमेवं वदति स्मितानने
नृपे नवप्रेमरसार्द्रचेतसि ।
विवर्तयन्ती मणिकङ्कणं करे
मुमोच मौनं न फणीन्द्रकन्यका ॥ ५८ ॥

माल्यवतीवचनम् ।

तया तथा दृष्टमथान्तरान्तरा
कटाक्षकान्तिः क्षपितावतंसया ।
इति स्मिताप्यायितदन्तदीधितिर्
जगाद तं माल्यवती विशाम्पतिम् ॥ ५९ ॥

---

१. h reads this stanza as follows —

यियदिजिह्वेऽपि यियद वेपसे
कियत् कपाले पुलकं बिभर्षि च ।
न वेत्ति मन्ये तव पक्षपातवन्
नितान्तमन्तःकरणं कृशोदरि ॥ ५५ ॥

२ T. reads कल्पसे for कल्पते ३ T reads स्वामहे for यतामहे ४ Tr reads मन्यते for मार्थ्यते ५ Tr omits two letters after दृष्ट°. ६ Tr has [illegible]—[illegible]°. ७ Tr reads माल्यवती for माल्यवती, while T substitutes मद for मे

तवैतया सत्कृतिपात्र सत्कृतं
स्वयं न यत् कल्पितमल्पमध्यया।
न सोऽवलेपो न च सा प्रमादिता
न च त्रपा तत्र नृपो ऽपराध्यति ॥ ६० ॥
कुनीति वार्ता तव वेत्सि वाञ्छितं
त्वमन्तरात्मेव न कस्य वा भुवि।
अतस्सखीभावगतस्य गोपनं
न युज्यते नस्त्वयि तन्निशम्यताम् ॥ ६१ ॥
शिलीमुखेऽस्मिन् तव नामलाञ्छिते
मृगोपनीते मृगशावलोचना।
प्रमोदमासेयमितो विलोकिते
करे चकोरीव तुषारदीधितेः ॥ ६२ ॥
क एष राजेति मुहुः कुतूहलाद्
इयं यदा पृष्टवती सखीजनम्।
अतस्तदास्यै कथितस्सविस्तरं
मया त्वमुर्वीतलमीनलाञ्छनः ॥ ६३ ॥
करेण सासूयमपास्य कर्णतः
क्वणद्द्विरेफावलि नीलमुत्पलम्।
तदैतयाभ्युद्गतपक्षपातया
श्रुता गुणाढ्यस्य बृहत्कथा तव ॥ ६४ ॥

---

१. T. reads this half as follows —
तनो तया सत्कृतिपात्रमत्कृतं
स्वयं न सत्कल्पितमल्पमध्यया ।

२ T. and I. read पर for न च and नृपाप॰ for नृपोप॰. ३. K. reads शं-सन न युज्यते किञ्चिदपापि वर्ण्यते, while Tr. has युज्यते न . . . . य निशम्यताम्.
४. K. and T. read ॰कननः for ॰लाञ्छन. ५. T. and I. read मदेतयाभ्यु-द्गत॰ and Tr. तदेतयाभ्युद्गत॰ both for तदैतयाभ्युद्गत॰.

इमां त्वदाकारनिरूपणे सखीम्
अवेत्य पर्युत्सुकलोचनामिव ।
ततो मया विश्वविलोचनोत्सवस्
त्वमेव चित्रे लिखितोऽसि[1] पार्थिव ॥ ६५ ॥
उदञ्चितव्यायतपक्ष्मणा[2] ततस्
सखीसमक्षं निभृतेन चक्षुषा ।
चिरं निपीतस्तृषेव[3] मुग्धया
त्वयैतया मध्यमलोकवासवः ॥ ६६ ॥
अतो[4] वरोऽयं युवयोस्समागमः
कुमुद्वती-चन्द्रमसोरिवोचितः ।
इयं हि बालोऽङ्कुसितं[5] मनोभुवस्
त्वमत्र लोकत्रितयैकसुन्दरः ॥ ६७ ॥
नृप गृहीतुं[6] नयमत्र-कोऽप्यलं
सुरेषु वा पन्नगपुङ्गवेषु वा ।
स एष पङ्केरुहकर्णिकामृदुस्[7]
त्वया शयोऽस्याः क्रियते सकौतुकः ॥ ६८ ॥
अयाचितोऽप्यर्पित एव ते शरः
क्षितेरयं न्यायविदां वरेतया ।
तदेनमभ्यर्थयसे कथं पुनः
कलत्रमेषा हि[10] वसुन्धरा तव ॥ ६९ ॥

१ T I. and Tr read ऽत्र for ऽसि, while T. reads पार्थिव। for पार्थिव.
२ Tr. has this line thus —
इद ॰ व्यायपरभयान्तत ।.
३. Tr. has ॰पीत। द्युहैव for ॰पीतस्तृषेव ४ T. reads ततो for अतो, while Te and I वरे for वरो ५ Tr reads बाला भसितं for बालोऽङ्कुसितं ६ T. reads मृगाद् for गृह ७ T reads मृदु for ॰मृदु ८. K. reads एष मे कार for एव मे धार ९ T. reads ॰वरे for ॰वरो॰ १०. K. and T. read ऽपि for हि.

इतीति वृत्तं तदुपाश्रयं तथा
प्रकाशयन्ती पृथिवीपतिम्प्रति ।
छलाद्[1]लीकभृकुटिं विधाय सा
तयाऽऽलुलोके फणिराजकन्यया[2] ॥ ७० ॥

अथ द्विरेफस्य मुखाब्जपातिनो
निवारणायोरगराजकन्यका ।
शिलातलात् सम्भ्रममीलितस्मृतिस्
तदाशु[3] लीलाशतपत्रमाददे ॥ ७१ ॥

ततस्स रोमाञ्चनिपीडिताङ्गदो
रमाङ्गदं व्यक्तशशिप्रभेङ्गितः ।
अपश्यदिन्दीवरदामदीर्घया
प्रमोद[4]विस्तारितया दृशा नृपः ॥ ७२ ॥

रमाङ्गदवचनम् ।

समर्पिता पार्थिव पुष्पकेतुना
तवेयमार्द्रप्रणया मनस्विनी ।
असीमसौन्दर्यसुधाविलासभूर्
उदन्वतेवेन्दुकला पिनाकिनः ॥ ७३ ॥

किमन्यदत्रोल्लसितं जगत्त्रये
तवैव[5] सौभाग्यपताकया नृप ।
यदागता मन्मथपत्त्रिणामियं[6]
शरव्यतामेवमपि श्रुते त्वयि ॥ ७४ ॥

---

१. I. reads स (च) लात् for छलात्. २ T. reads °कन्यका for °कन्यया. ३. K. reads तयाऽऽशु for तदाशु. ४. K. reads प्रसाद° for प्रमोद°. ५. T. reads तवेव for तवैव. ६. Tr. has:—

यदागता मन्मथ – – – मय
शरव्यतामेवमपि श्रुते त्वयि ।

वधूर्दिलीपस्य सुदक्षिणा यथा
यथा सुनन्दा भरतस्य भूपतेः ।
रघूद्वहस्यावनिकन्यका यथा
तथा तवेयं विधिनोपपादिता ॥ ७५ ॥

किमन्यदस्याः कृतपाणिपीडनः
पदं निधत्से गृहमेधिनां धुरि ।
इति प्रसर्पत्स्मितचन्द्रिकद्दशनैर्
अभाषतोर्वीतिलकं रमाङ्गदः ॥ ७६ ॥
कुलकम् ।

विलोकितं चित्रमलीकभाषिणी
भवत्सखीयं प्रतिभासते मम ।
उदीरितैवं किल पार्थिवेन सा
भृशं ललज्जे निभृतं जहास च ॥ ७७ ॥

विलोकयन्ती तमपाङ्गलोचना
समुल्लसत्स्वेदलवाङ्कितस्तनी ।
ततस्सुजातस्तबकास्तमौक्तिका
लतेव सा हेममयी व्यकम्पत ॥ ७८ ॥

मुखे तयासक्तमिदं शशिप्रभे
दृशान्तसागतयैतदीयया ।
सखीजनस्सस्मितमित्युवाच ताम्
अजन्तिनार्थं च गिरो रमाङ्गदः ॥ ७९ ॥

---

१ Tr reads गनाभा and K. सुनाभा both for सुनन्दा २ h. reads °सादिता for °पादिता ३ T. reads °पीडनं for °पीडन ४ Except I all others do not insert कुलकम् ५ T. reads विलोकितः and अलीकभाषिणि for विलोकितं and अलीकभाषिणी respectively. ६ Tr mutilates two letters after उदीरितैव but there appears in correction मृदु for the same, while I reads उदीरितैवं for उदीरितैवं ७ h. reads भृशं for भृशं
८. Tr. mutilates this line —
दृशान्तसागतयैतदीयया।
९. Tr. mutilates three letters before रमाङ्गद

अत्रान्तरे झटिति चित्तमिवाच्छमम्भः
क्षोभं जगाम सरितस्तुहिनांशुसूतेः।
वाति स्म च प्रसभभग्नतमाल-ताल-
हिन्ताल-साल-सरलः सहसा समीरः ॥ ८० ॥

पयोदोदयः।

उदनमदथ तत्क्षणादुदञ्चत्-
कनकपिशङ्गतडिल्लतः पयोदः।
अधरितमुरजध्वनीनि मुञ्चन्
विधुरितकर्णतलानि गर्जितानि ॥ ८१ ॥

अथ समुदितत्रासा मेघस्वनान्नवनु भूपतेर्
भुजपरिघयोरन्तर्बालाप्रवेष्टुमियेष सा।
किमसि चकिता मा त्वं भैषीरितो भव लज्जया
कृतमिति च तामूचे देवस्स साहसलाञ्छनः ॥८२॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभासँल्लापो नाम सप्तमः सर्गः समाप्तः ॥ ७ ॥

---

१ I reads झगिति and T स्तगिति both for झटिति २ T reads °सून्के for °सूते while I omits शु through mistake ३ K reads प्रहिनहभम°, I प्रसभभग्नि and gives the letter म for ग्नि in the margin, for प्रसभभग्न° ४ I omits हिन्तालसाल°, but gives in the marginal correction ५ Tr mutilates two letters after उद and omits तत्° ६ I and T read °कण्ठ° for °कर्ण° ७ Tr has thus —

अथ – – – – – – सा – – – – नवभूपते

८ I has °न्न न for °न्नु while T reads °त्रासमेघस्वनान्न न for °त्रासा मेघस्वनान्नु ९ Tr has this half as follows —

किमपि चकितामात्व वै – – – – रलज्जया
कृतमिति च तामूचे – – – – – – – – – – ॥ ८२ ॥

१० I reads for the complete quolophone as follows—नवसाहसाङ्कचरिते परिमलस्य कृतौ फणिराजसुतासम्भाषण सप्तम सर्ग, Tr reads इति परिमल-कृतौ नवसाहसाङ्कचरिते फणिराजसुतासभाषणो नाम सप्तम सर्ग and T परिमल-कालिदासस्य कृतौ महाकाव्ये साहसाङ्कचरिते षष्ठ सर्ग।

# अथाष्टमः सर्गः ।

## नायिकातिरोधानम् ।

सोऽपदेऽथ भुजगेन्द्रकन्यका
खे पयोदपटलैस्तिरोहिते ।
नर्मदापुलिनपह्लवस्थिता
हंसपङ्क्तिरिव कम्पमाददे ॥ १ ॥

स्पर्धयेव निचयः पयोमुचां
तारमन्द्रमनदत् यथायथा ।
सा नरेन्द्रतिलकं तमैक्षत
मुग्धलोलनयना तथातथा ॥ २ ॥

उल्लसन्नवपयोधरालसां
द्यां च तां च सुमुखीं विलोकयन् ।
भूपतिस्स नितरामभूद्वशो
विस्मयस्य च मनोभवस्य च ॥ ३ ॥

वामनत्वमलिनत्वमत्यजन्
व्यञ्जितक्रम इव त्रिविक्रमः ।

---

१ Tr mutilates three letters after सा २ T reads स्वे for खे and Tr omitting one letter at the beginning of this line and then it has °हिसरे° omitting हिते for °रोहिते ३ T reads पङ्क्ति°. I also reads the same, but corrects कम्प° ४ K reads °मार्धय for °माददे ५ K reads पदे पदे, while Tr mutilates 7 letters at the beginning of this line and I reads बाल° for मुग्ध°. ६ T. reads °त्ससा for °ल्सा ७ T reads द्यां च तां च सुमुखी for द्यां च तां च सुमुखीं ८ Tr. reads वशः for वशो ९ I reads वामनत्वमलिनेचकात्यजन्, Tr वामनत्व–मत वा त्यजन् and T. वामनत्वमलिनेन न त्यजन् all for वामनत्वमलिनत्वमत्यजन् १० T has व्यञ्जित – – – परिविक्रमः and K व्यञ्जितविश्वपरिविक्रम.

क्रामति स्म सहसैव मेघभुर्
अन्धकारनिकरोऽथ रोदसी ॥ ४ ॥
नेत्ररोधिनि तयोर्न केवलं
मूर्च्छिते तमसि वैशसं हृदि ।
यावदास्यविगलद्बिसाङ्कुरे
चक्रवाकमिथुने ऽप्यजृम्भत ॥ ५ ॥
कर्णभूषणमणिप्रभालवैस्
तोकलक्षितकपोलपत्रया ।
कृष्यमाणनयनोऽथ पिप्रिये
पन्नगेन्द्रसुतया तया नृपः ॥ ६ ॥
तेजसि स्फुरति ताडिते मुहुर्
बिभ्रती कनकभङ्गपिङ्गले ।
तं हृदिस्थितमिवेशमीक्षितुं
साऽपि मीलितविलोचनाऽभवत् ॥ ७ ॥
आकाशवाणी ।
एवं ते न घटते मनोरथः
पार्थिवाऽहिपतिकन्यकाम्प्रति ।
गच्छ विन्ध्यविपिनान्तदृष्टया
वञ्चितो ऽसि मृगतृष्णयैतया ॥ ८ ॥

१ T. reads °न्धकार° for °न्धकार° २ Tr has नेत्रयो – – – – न केवल ३ Γ has यामवास्यविगलद्बिमा and K यामवाप्य विगलद्बिमाय सा for यावदास्यविगलद्बिसाङ्कुरे ४ T reads विभ्रिये for पिप्रिये ५ T. and Tr. read ताम्रिते and I तडिते for ताडिते ६ I reads °पिङ्ग° and Tr °पङ्क° both for °भङ्ग° ७ Tr has मिवे-वीक्षितु and gives in correction °वाबलाकि° for °शमीक्षि° ८ Tr reads निर्मीलित° for ऽपि मीलित° ९ Tr mutilates this line

साहसोदधिविलोडने स्वयं
योऽस्मैसलतयार्पयिष्यति ।
श्रीरिवोरसि सुरद्विपः पदम्
तस्य निश्चितमियं विधास्यति ॥ ९ ॥

पश्य पश्य चपलेयमन्तिकात्
नीयते तव यथोचितं कुरु ।
एवमेव यदियं न लभ्यते
जानकीव जनकप्रतिज्ञया ॥ १० ॥

कन्यकासि किमिदं शशिप्रभे
युक्तमेहि पितुरन्तिकं व्रज ।
इत्यविग्रहवती नभस्तलात्
उल्ललास सहसा सरस्वती ॥ ११ ॥

तां निशम्य स निकामविस्मितः
साचिकार्मुकलतामलोकत ।
इन्दुमौलिगलकन्दलासित
तत्क्षणाच्च तिमिरं न्यवर्तत ॥ १२ ॥

१ Tr reads °विलाकने for °विलाडने २ Tr mutilates 8 letters at the end of this line and T and I read यो राम for योऽसम° ३ T reads °मिर for °मिय while K निधास्यति for विधास्यति ४ Tr reads °मुद्रिता नीयते for °मन्ति कान्नीयते, while T reads °य यन्तिका for °यमन्तिकात् ५ Tr mutilates 9 letters at the beginning of this line ६ T and I read भज for व्रज ७ T reads °स्थलात् for °स्तलात् ८ Tr mutilates this line ९ Tr reads सारि for साचि° १० K reads अलोकन for अलोकत ११ K and Tr read °कन्दलासितं for °कन्दलासितं १२ Tr reads किमिति for तिमिरं but the corrector has put तिमिरं instead of किमिति and T निवर्तत for न्यवर्तत I also reads the same, but correct in the margin

साऽचिरांशुतपनीयमेखला
शक्रचापमणिकुण्डला ततः ।
कापि मुद्रितमयूरताण्डवा
संहतिर्जलमुचां तिरोदधे ॥ १३ ॥

सा पुरातनपथेन[2] पावनी
सोमसूतिरपि निम्नगां[3] वहत् ।
स्वादुनिर्मलरसोर्मिनिर्भरा[4]
भारतीव मसृणं[5] महाकवेः ॥ १४ ॥

अप्यपाकृतरयः स नर्मदा-
वीचिलास्यरचनाकुतूहली[6] ।
आनवौ[7] शबरराजयोषितां
नर्तितालकलतस्समीरणः ॥ १५ ॥

इत्यकालजलदादिवैकृते[8]
केन चिद्विरचिते गते शमम्[9] ।
भूपतेः शशिमुखी सखीयुता[10]
नेत्रनिर्विषयतामवाप सा ॥ १६ ॥

कापि नूनमपहृत्य तन्मनो
नागराजदुहितो[11] जगाम सा ।

---

१ Tr mutilates 9 letters after शक्र २ Tr. reads °पद्देन for °पथेन ३ K. reads निर्मला for निम्नगा ४ Tr has स्वा – – – – – – – – निर्भरा, while K and T. have स्वादुनिर्मलरसोर्मिभारती निर्भरेव and I has स्वादुनिर्मलरसोर्मिभारती निर्भरा च, but corrects स्वादुनिर्मलरसोर्मिनिर्भरा भारतीव ५ Tr reads मसृणा for मसृणं. ६ T reads °वीचिरस्य रचना° for °वीचिलास्यरचना° ७ K reads आययौ for आनवौ ८ Tr. mutilates two letters at the beginning of this line. ९ Tr reads समम् for शमम I. also the same, but corrects शमम १० Tr. has – – – शशिमुखी – – – सा for this whole line ११ Tr. reads °तनया for °दुहिता and mutilates 4 letters after this word

उत्पलस्य सरसं लसत्स्पृहा
चक्रवाककवनितेव केसरम् ॥ १७ ॥

अग्रतः कृतपयोधरश्रिया
धौततप्ततपनीयकान्तया ।
विद्युतेव सदृशा तयाऽऽकुलस्
सोऽभवज्झटिति दृष्टनष्टया ॥ १८ ॥

सा पुरो मम हृतेति लज्जया
चिन्तया किमिव सा चरेदिति ।
सा पुनर्न सुलभेत्यसौ शुचा
तप्यतेस्म तिसृभिः क्षितीश्वरः ॥ १९ ॥

तस्य तापजननेन मानसं
तेन बालविरहेण विव्यथे ।
केतकच्छदकदर्थने परं
यत् कणोऽपि शिशिरः प्रगल्भते ॥ २० ॥

जित्वरं जगति पुष्पकेतुना
तद्विकृष्य तरसा शरासनम् ।

---

१ Tr reads केवलम् for केसरम २ Tr mutilates first three letters, but there appears visarga in it. ३ K and Tr read धातु° for धौत° ४ T reads विद्युतेव सदृशा for विद्युतेव सदृशा, while Tr has विद्युत सदृशयाति – – –. ५ Tr has – – – – झागिति, while K substitutes सपदि and T स्तविति for झटिति ६ K reads नहि and T ननु for न सु° ७ T. reads तापसजनन and K. तापसस्नेन for तापजननेन, while Tr mutilates seven letters at the beginning of this line ८ Tr reads विद्यते for विव्यथे ९ T. reads ते तु काश्चिदकर्थने परं यस्कणोपि Tr has तेन गच्छ दस्दने यस्यापकणोपि for केतकच्छदकदर्थने परं यत्कणोऽपि, while I and T substitute शिशिन for शिशिर १० I does not insert तद्विकृष्य but it appears in the marginal correction, while Tr mutilates four letters after तरसा

ताड्यते स्म हृदये पतत्रिणा
सोऽथ मालवकुरङ्गलांछनः ॥ २१ ॥
लज्जया वलितकण्ठकन्दलं
लोचनाञ्चलमिलद्वतंसकम् ।
तस्य वर्तितमिवाभवत्तदा
तत् प्रियावदनमुन्नसं हृदि ॥ २२ ॥
म्लानिमाप स तया विना नृपस्
तत्र पन्नगपतेस्तनूजया ।
स्वां रुचिं नहि कदाचिदश्नुते
शर्वरीविरहधूसरश्शशी ॥ २३ ॥
पाण्डुपक्ष्मलदृशः परिच्युतं
सोऽथ माल्यशकलं व्यलोकत ।
तादृशि व्यतिकरे विनिर्गतं
हासलेशमिव पुष्पधन्वनः ॥ २४ ॥

---

१. I. omits the following portion originally.—

– – – – – द्ये पतत्रिणा
सोऽथ मालवकुरङ्गलाञ्छन॰ ॥ २१ ॥
लज्जया वलितकण्ठकन्दलं
लोचनाञ्चलमिलद्वतंसकम् ।
तस्य वर्तितमिवाभवत्तदा
तत् प्रियावदनमुन्नसं हृदि ॥ २२ ॥,

but it appears in the margingal correction; while Tr. mutilates first four letters in this line. २ Tr. has the following two lines as follows —

तस्य – – त्तमिवाभ – – –
– – – – – – – मुन्नसं हृदि ॥ २२ ॥

३ Tr. reads मौरि°, K. ग्लानि° both for म्लानि° ४ K. reads ईहते for अश्नुते ५ Tr. mutilates three letters at the beginning of this line and reads °सलदृश. for °क्ष्मलदृश॰ and corrector substitutes केशतोऽथ सुदृश ; while T. reads परिच्युत for परिच्युतं ६ K reads ऽपि for ऽथ. ७. T. reads विनिर्गतं for विनिर्गतं

शोभदुज्ज्वलकपोलसङ्गतं
कुङ्कुमेन दलकोटिचुम्बिना ।
सम्भ्रमेण गलितं नतभ्रुवः
कर्णतामरसमाददे ऽथ सः ॥ २५ ॥
कार्मुके सति शरेषु सत्स्वपि
प्रेयसी तव हृतान्तिकादिति ।
तेन सौरभहृतालिनिःस्वनैर्
वाच्यतेव नृपतेर्व्यधीयत ॥ २६ ॥
कोपनिःश्वसितवेपितच्छदं
सन्निरीक्ष्य वदने स सादरः ।
अर्धमीलितविलोचनोत्पलः
पुष्पकीलित इवाभवत् क्षणम् ॥ २७ ॥
नर्मदोर्मिलुलिते तदंशुके
पद्मालिलितां समागिणि ।
आननस्तनविशेषितं दृशा
सोऽस्पृशत् मनयसिन्दुपाण्डुनि ॥ २८ ॥
सो विवेद नवसाहसाङ्क इति
दन्तयत्तमनसेन पर्वणा ।

पश्य तत्पदमितीव रेखया
तस्य सारसरुतैरसूच्यत ॥ २९ ॥

किं निमग्नमिह बालया तया
भीतया भुजगराजकन्यया ।
नैवमत्र नियतं रसातले
विद्यते विवरमित्यतर्कयत् ॥ ३० ॥

सोऽतिमात्रगहने ऽपि रंहसा
पार्थिव॰ पतितुमैच्छदम्भसि ।
जीवितं तृणमिवावजानते
साहसव्यसनिनो ऽपि तादृशाः ॥ ३१ ॥

तत् समीक्षितमवन्तिवासवस्
तस्य नावददुपान्तवर्तिनः ।
एव वित्तमिह साहसोत्सवे
कल्पयिष्यति ममेति शङ्कितः ॥ ३२ ॥

उज्झति स्म स शैने समुच्छ्वसन्
पल्लवासनमुपास्यशासनः ।
अग्रहीच्च सशरं करेण तत्
व्यक्तराजककुदेन कार्मुकम् ॥ ३३ ॥

१ Tr reads तच्चनमितीव रेखया f r तत्पदमितीव रेखया, while J substitutes °पन्° for °पद°  २ Tr reads किं न मग्न° for किं निमग्न°  ३ K reads °जन्यया for °कन्यया  ४ Tr m it lates six letters after नैव  ५ Tr mutilates three letters after विद्यते  ६ Tr reads साहसा° and mutilates five letters af er this word  ७ T rea ls तावदुपस्थान्त° for °दावदुपान्त°  ८ Tr reads साहसोत्सवे for साहसोत्सवे  ९ K reads लज्जित for शङ्कित  १० Tr reads शद for शने and mut lates f ur letters after it in this l ne and first two letters in the next line

पन्नगेन्द्रदुहितुः करेण य·
सख्यमापदरविन्दबन्धुना ।
अर्पित प्रणयिना तमप्यसौ
सायक कनकपुङ्खमाददे ॥ ३४ ॥

सुभ्रुवः स्मरविलासदेशिकं
स शशस स शरे पतत्रिषु ।
पीतशीतकरमूर्तिनानवं
भानुमानिव मयूखमग्रुपं ॥ ३५ ॥

व्यक्तचरणलक्ष्मणा ततस्
स्रस्तकेशकुसुमाकुलालिना ।
मेघसिक्तसिकतेन वर्त्मना
नर्मदाजलसमीपमाप सः ॥ ३६ ॥

एष जातु न विकत्थते क्वचित्
लक्ष्यतेऽस्य फलतः सदा क्रिया ।
तत् करिष्यति किमत्र साहसं
चेतसीति विदधे रमाङ्गदः ॥ ३७ ॥

---

१ After अ Tr mutilates eight letters in this line २ T reads °देशिक and I °देशक both for °देशिक ३ Tr reads पतग for स शर ४ Tr mutilates two letters at the end of this line ५ Tr reads उल्लसचरण° for व्यक्तचरण° ६ K reads °करालिना and T. °कलालिना for °कुलालिना ७ I reads °कुसुमेन for °सिकतेन ८ T reads जातकलविकत्थते K reads जातुविकत्थन and gives in the margin जातु न विकत्थन for जातु न विकत्थते ९ Tr mutilates seven letters after लक्ष्यत while T reads फलक सदाक्रिया for फलत सदा क्रिया १० K reads रमाङ्गद for रमाङ्गद

नर्मदाप्रवेशः।

अक्षिपत्तटशिलाविटङ्कतः
पार्थिवः स्वमथ नर्मदाम्भसि।
वारिधेः पयसि विश्वदीपकः
सोयमद्रिशिखरादिवार्यमा ॥ ३८ ॥

तत्र मीनमकराकुले पतन्
आससाद स विलासमीश्वरः।
यामुनाम्भसि निपातिनः पुरा
गोपतामुपगतस्य शार्ङ्गिणः ॥ ३९ ॥

अम्भसस्तदवपाततडितात्
ऊर्ध्वमेत्य निपतत्सु विन्दुषु।
माहसेन परितोषितैस्सुरैर्
मौक्तिकार्घ इव तस्य चिक्षिपे ॥ ४० ॥

किञ्चिदन्तरितमूर्तिभिः क्षणाद्
अन्वगच्छदथ तं रमाङ्गदः।
येन यात्यरुणसारथिः पथा
वामरैस्तमवलम्बते न किम् ॥ ४१ ॥

१ Tr. mutilates last two letters in this line. २. Tr. reads विम्ब° for शाम° and T. °मरि° for °मद्रि°. ३. Tr. reads °ल्ये for °कुले. ४. T. reads ईश्वरम् for ईश्वरः. ५ T. reads यामुनाम्बुधि° for यामुनाम्भसि and I. यामुनाम्बुधि° for the same. ६ T. mutilates first ten letters in this line. ७ K. and T. read °वगाह° for °दवपात°. ८. T. reads मौक्तिकारत्व for मौक्तिकार्घं. ९ T. reads °मूर्तिनिः and Tr. °मूर्तिमदपान for °मूर्तिभिः and °मूर्तिभिः क्षणात्. १० Tr. mutilates first seven letters in this line. ११. T. reads मवमवलम्बते for मवलम्बते, while K. reads ममवगच्छते for the same.

केस्तुलाग्रमधिरोप्य जीवितं
स्वामिन त्वमिव सेवतामिति ।
तेस्य हंसनिनदेन वल्गुना
साधुवादमिव नर्मदा ददौ ॥ ४२ ॥

विलप्रवेश ।

तौ मुहुर्जलचरैरदृश्यताम्
अग्रतश्चकितमुक्तवर्त्मभिः ।
ध्वान्तसन्ततिभिदे रसातलम्
प्रस्थितौ रवि-निशाकराविव ॥ ४३ ॥

आश्रयस्यवनिमेघवाहने
वारिगर्भमभितो गरीयसि ।
प्राप मेकलसुता समानताम्
अन्तराहितनिधानया भुवा ॥ ४४ ॥

उज्झिता झटिति कार्यगौरवात्
ईश्वरेण दहचे न मेदिनी ।
कोशगेन पुनरप्यवेक्ष्यता
भानुनेव पदवी पयोमुचाम् ॥ ४५ ॥

---

1 Tr reads मनुना° for वल्गुना°. 2 T reads त्वमिव सहसा and Tr. त्वमिव सेवतां both for त्वमिव सेवताम्. 3 Tr mutilates six letters after मग्र. 4 Tr reads ददौ for ददौ. 5 Tr reads °निशे for °निश. 6 T. reads प्रस्थिता for प्रस्थितौ. 7 T and Tr reads मलम° for मेकल°. 8 Tr reads °निधुमया for निधानया. 9 T reads झगिति and T झगिति for झटिति. 10 From उज्झिता झटिति कार्य° to the end of this stanza and then 3x stanzas of this Canto and the complete ninth and tenth cantos are lost in the manuscript Tr.

आपपात सरमाद्रुदः क्षणात्
सर्वतस्स तमसाविले विले ।
गूढमत्सरविशे विशेषवान्
दुर्जनस्य मनसीव सद्गुणः ॥ ४६ ॥

यद्बभूव पुरतो ऽस्य भूपतेर्
एककुण्डलपटोसितं तमः ।
तस्य तद्दिनकरांशुभासुरैर्
मौलिरत्नकिरणैरभज्यत ॥ ४७ ॥

सान्द्रहेमरजसा महौजसाम्
अग्रगौरगपधूपगन्धिना ।
सोऽथ तेन बिलवर्त्मना शनैः
क्रोशमात्रमगमन्नरेश्वरः ॥ ४८ ॥

सिंहदर्शनम् ।

लग्नसान्द्रगजशोणितच्छटैश्
शौर्यपावकशिखाङ्कुरैरिव ।
केसरैरतिकरालकन्धरो
मार्गमस्य रुरुधे ऽथ केसरी ॥ ४९ ॥

शुक्तपर्गिरिवरस्य रंहसा
तं विशामधिपमभ्यधावत ।

---

१ T. reads 'ऊढ' for 'गूढ' and substitutes 'विले' for 'विशे'. २ K. and T. read विशेषता for विशेषवान्. ३ T. reads म for मन्. ४ T. reads 'लिमधं' for 'लिप्तं' but it seems quite incorrect. ५ T. reads 'भूम' for 'धूप'. ६ T. reads मनसर for मत्सर..

व्यात्तदीर्घदशनास्यकन्दरः
पूर्णमिन्दुमिव सिंहिकासुतः ॥ ९० ॥

अर्धचन्द्रमथ तज्जिघांसया
सन्दधे धनुषि यावदीश्वरः ।
तावदस्फुटितकोरकं पुरो
बालकुन्दविटपं तमैक्षत ॥ ९१ ॥

बिभ्रतो विकटदंष्ट्रमाननम्
कालमेघशकलसितत्विषः ।
आयतो ऽभिमुखमीर्ष्यया जवात्
तेन वर्त्म मुमुचे न पोत्रिणः ॥ ९२ ॥

गजदर्शनम् ।

किञ्चिदस्य पुरतो ऽथ गच्छतः
कर्णतालविधुतालिपङ्क्तिना ।
रुद्धयते स्म समदेन पद्धतिर्
दीर्घदन्तमुसलेन दन्तिना ॥ ९३ ॥

मन्द्रकण्ठनिनदो ऽथ निर्जगाम्
ऊर्ध्वबालधिपदग्रलोचनः ।
कुण्डलीकृतकरस्तमभ्यगात्
स क्रुधा निभृतकर्णपल्लवः ॥ ९४ ॥

1. T. reads °दशनास्यकन्दर पूर्व° for °दशनास्यकन्दरः पूर्णं ; while K. substitutes °कन्दर for °कन्दर. 2 K. reads [illegible] for [illegible]. 3 T. reads [illegible] for [illegible] 4 K. reads °मुशलेन for मुसलेन

यावदङ्कुरितमत्सरो ऽभवत्
तस्य सम्मुखमधिज्यकार्मुकः ।
तावदैक्षत न स क्वचिद्विपं
राजगन्धमद (वह?)गन्धकेसरी ॥ ९५ ॥

उत्पतन्निपतदग्रतो मुहुर्
मुञ्चदट्टहसितं सहार्चिषा ।
केवलं कपिलकुन्तलं शिरः
पश्यतोऽस्य न चमत्कृतं मनः ॥ ९६ ॥

एवमादि यदभून्महीपतेर्
अद्भुतं पथि विभीषिकावहम् ।
तद्बिभेद निजसत्त्वसम्पदा
तिग्मदीधितिरिव त्विषा तमः ॥ ९७ ॥

सरिदुत्तरणम् ।

तां ददर्श सरितं सुदुस्तराम्
अग्रतोऽथ विलकल्पविद्रुपः ।
स्पर्शतः किल यदम्भसां झटि-
त्यश्मभावमुपयान्त्यसूरयः ॥ ९८ ॥

मारुतैरपरपारनुन्नया
प्रांशु वंशलतया स सानुगः ।

---

१ T. reads गजयूथ° for °मद (वह) गन्ध° २ T reads आर्द्र° for अद्र°. ३ T. reads हसार्चिषा for सहार्चिषा ४ T. and I read निर्भीपिकोद्वहम् for विभीषिकावहम् ५ I reads °भोऽथ for °तोऽथ and substitutes °कल्प° for °कल्प°. ६ I. reads झगिति and T. हगिति both for झटिति ७. I. reads सभानुग. for स सानुग..

तामलङ्घ्यदर्थोपगूढया
जन्मभीतिमिव योगविद्यया ॥ ५९ ॥

नगरदर्शनम् ।

प्रस्थितस्तदनु सौधमं पुरस्
सोऽथ साहसवतां पुरस्सरः ।
निर्मितं मणिमयूखपल्लवैर्
बालमातपमिव व्यलोकत ॥ ६० ॥

इन्द्रनीलकपिशीर्षकं ततस्
सो ऽभितः स्फटिकसालमैक्षत ।
सावशेषजलनीलकोटिभिश्
शारदैर्घटितमम्बुदैरिव ॥ ६१ ॥

उत्पताकमणितोरणाङ्कितं
मण्डितं कनकपल्लवस्रजा ।
किञ्च काञ्चनकपाटसम्पुटं
तत्र गोपुरमपश्यदीश्वरः ॥ ६२ ॥

विस्मयेन विषयीकृतः पुरं
तेन सोऽविशदवन्तिवासवः ।
निर्वृतेः पदमिवोज्झितावनिस्
सूर्यमण्डलपथेन योगवान् ॥ ६३ ॥

---

१०. I reads अलङ्घ्य यद्यो° for अलङ्घ्यदर्थो°, while T. substitutes °भीसम for °भीतिम. २. K. reads सायममत for सौधमं पुरस् ३. T. reads सोभित स्फुटितसाल° for सोऽभित स्फटिकसाल°. ४. T and I. read °कपाट° for °कपाट°. ५ I reads °वन्ति° for °वन्ति°. ६. In I. two letters are not quite legible, but its reading appears to be धैर्यवान् or धूमवान् and T. reads धैर्यवान् both for योगवान्.

तत्र वैद्रुमगवाक्षमुच्छ्रितं
हेमहर्म्यमवलोकते स्म सः ।
मेरुशृङ्गमिव धातुताम्रया
सन्ध्यया कृतपदं क्वचित्क्वचित् ॥ ६४ ॥
अग्रतस्स च यशोभटो ऽविशत्
सोऽथ कौतुकहृतस्तदङ्गणम् ।
इन्द्रनीलमणिकान्तिमेचकं
व्योम सारुणं इवोष्णदीधितिः ॥ ६५ ॥
पद्मरागरचितालवालका
वेदिकामणिविटङ्कविस्तृता ।
तेन तत्र ददृशे कुतूहलाद्
आन्तिके कनकमाधवीलता ॥ ६६ ॥

स्त्रीदर्शनम् ।

तत्तले स्थितिमुपेयुषा श्रमात्
तेन काचिदबला व्यलोकत ।
निर्गता झटिति हेमवेश्मतश्
श्रीः सुवर्णकमलोदरादिव ॥ ६७ ॥
अंशुकेन शरदिन्दुबन्धुना
रेखयेव यशसाभ्यभासिता ।

---

१ T. reads मुद्रित for 'मुच्छ्रितं. २ K. substitutes "शृङ्ग" for "शृङ्ग". ३ T. reads "मायया for "ताम्रया. ४ I. reads स्म° for स्स च. ५ T. reads 'हृतस्तदङ्गणम्, and I. 'हृतस्तदङ्गणम both for 'हृतस्तदङ्गणम. ६ T. reads सारुणं for सारुण. ७ T. reads 'वालकी for "वालका. ८ T. reads अबला for झटिति, while K. reads "हेमतः for "वेश्मतः. ९. T. reads श्रीसुवर्ण" for श्रीःसुवर्ण'. १० K reads स्वांशुकेन शरदा...भासिता for स्वंशुकेन शरदा ऽभ्यभासिता.

कान्तिमत्यधरनीलवाससा
यामुनेन पयसेव जाह्नवी ॥ ६८ ॥
बन्धुजीवकुमुदच्छवी मुखे
बिभ्रतीव कुरुविन्दकुण्डले ।
शर्वरीव सितपक्षपर्वणश्
शीतदीधितिपतङ्गमण्डले ॥ ६९ ॥
शोभिता किमपि हारलेखया
भिन्नखेलगतिलोलयोरसि ।
तत्क्षणस्फुटितकुन्दशुद्धया
गन्धवाहपदवीव गङ्गया ॥ ७० ॥
आननेन ललिताक्षिपक्ष्मणा
निर्यदुज्ज्वलकपोलकान्तिना ।
कुर्वतीव फणिलोकमङ्कित
यामिनीतिलकबिन्दुनेन्दुना ॥ ७१ ॥
पुष्पदाम दधती सषट्पदम्
दक्षिणेन शशिपाण्डुपाणिना ।
साक्षत सदधि-दूर्वयाञ्चितं
हेमपात्रमितरेण बिभ्रती ॥ ७२ ॥
कुलकम् ।

तन्निरीक्षणसविस्मय ततः
पार्थिव जनितकौतुक शुकः ।

१ I reads यामुनेन for यामुनन, but it seems incorrect २. T. reads पद्मत्र for पयसेव ३ T and I read कुरुविन्द° for कुरुविन्द° ४ K reads °या-ङ्कित for °याञ्चित K substitutes लीलया for बिभ्रती ६ T. does not insert this.

इत्युवाच मणिपञ्जरे स्थितो
बालचूतविटपावलम्बिनि ॥ ७३ ॥

शुकवाक्यम् ।

सत्क्रियां रचयितुं तवातिथेर्
नर्मदा भगवतीयमुद्यता ।
श्लाघनीयचरितो जगत्त्रये
कस्य नासि बहुमानभाजनम् ॥ ७४ ॥

देव पन्नगवधूभिरुज्ज्वलं
वल्लकीकलरवं प्रियैस्सह ।
मल्लिकाधवलमत्र गीयते
केलिरत्नभवनेषु ते यशः ॥ ७५ ॥

दुर्मना नृप, यथाऽमुना गता
सा विलासवसतिः शशिप्रभा ।
तत्सखीजनकथान्वयश्रुतेर्
युष्मदागमनमूहितं मया ॥ ७६ ॥

दुर्लभोऽयमतिथिर्ममापि तत्
गृह्यतामुचितया सपर्यया ।
पार्थिवो हि नवसाहसाङ्क-
इत्येष सीयकनरेन्द्रनन्दनः ॥ ७७ ॥

---

१ T. reads तवातिथ for तवातिथेर्. २ K. reads नासि for नासि. ३ I. reads [illegible]' and T. [illegible]' for [illegible]', while in I. the original letter appears म but it is made म. ४ T. reads 'यथा-माऽमुना for नृप यथाऽमुना. ५ T. reads '[illegible]' for '[illegible]'. ६ T. reads '[illegible] मया and K. '[illegible]' for 'मूहितं मया'. ७ K. reads [illegible]. T. [illegible] both for [illegible] while the reading of I. is quite illegible. It may be [illegible] or something like that.

पेशलोक्तिनिपुणस्य पक्षिणस्
तस्य गामिति निशम्य सस्मित ।
तामथ प्रणमति स्म निम्नगाम्
इन्दुसूतिमवनीन्दुरादृत ॥ ७८ ॥
कुलकम्।[1]

नर्मदाकृत सत्कार ।

कारितासनपरिग्रहे पुरो
भूपतावपचितिं विधाय सा ।
आस्त मौक्तिकशिलातले ततश्
चेतसीव सुकवे सरस्वती ॥ ७९ ॥

स्थित्वाथ किञ्चित्तमवन्तिनाथम्
अपृच्छदच्छन्नकुतूहला[2] सा ।
निवेद्यता मानवदेव[3] कस्मात्
अलङ्कृता भूमिरियं त्वयेति ॥ ८० ॥

तस्यै शशंस निजमा मृगयाविहारात्
वृत्तान्तमन्तविरस स विशुद्धवृत्ति ।
कान्तास्मृतिप्रसभ[4]कण्टकिताङ्गजात-
लज्जावनम्रवदनो नवसाहसाङ्क ॥ ८१ ॥

इति[5] श्रीपरिमलापरनाम्न मृगाङ्कदत्तसूनो पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते नागलोकावतारो नामाष्टम सर्ग ॥ ८ ॥

---

१ h. and T do not insert कुलकम्  २ T reads °च्छिन्न° for °च्छन्न°
३ h. reads मानव° for मानव°  ४ T reads °स्मितिप्रसह° for °स्मृतिप्रसभ°
५ I reads इति नवसाहसाङ्कचरिते परिमलस्य कृतौ नागलोकावतारो ऽष्टम सर्ग
T इति परिमलकालिदासस्य कृतौ साहसाङ्कचरिते नागलोकावतारो नाम सप्तम सर्ग

## अथ नवमः सर्गः ।

नर्मदावाक्यम् ।

अथ स्वरेणाङ्गणदीर्घिकाणां[1]
संवाहयन्ती कलहंसनादम् ।
तमित्यवन्तीश्वरमा बभाषे
सा मेकलक्ष्माधरराजकन्या ॥ १ ॥

नास्य क्षितीशोपकृतं जनस्य
कियत् तया पन्नगराजपुत्र्या ।
यस्याः कृते सम्प्रति भूषितेयम्
भूमिस्त्वया भूर्धशलाञ्छनेन ॥ २ ॥

इदं नृप त्वामवलोक्य जातम्
मनः प्रमोदेन ममास्वतन्त्रम् ।
नो कस्य लोकत्रयसम्मतानाम्
भवेत् सतां सङ्गतमुत्सवाय ॥ ३ ॥

अद्यैव कस्यापि मया शुभस्य
त्वद्दर्शनेनानुमितो विपाकः ।
आतिथ्यमक्ष्णोः कथमन्यथैवम्
आयान्ति रत्नानि भवाद्विधानि ॥ ४ ॥

---

१ The 82nd leaf of the Manuscript I is torn into pieces, some being lost we have only 3 So the colophon of the last canto nearly first 6 or 7 stanzas of this canto cannot be fully settled from the portion of I.
२ T. reads °णाङ्गण° for °णाङ्गण°. ३ T reads नास्दा for नास्य ४ K reads भूरुङ्गश° for भूशश° ५ T reads नाकस्य for नो कस्य ६ K reads °सङ्गताना for सम्मताना ७ T. reads सङ्गत° and K स्वङ्गत° both for सङ्गत°.
८ T. reads °नमिती for °नुमिता

स वत्स, जाते जनकः कृतात्मा
सा पुण्यमूर्तिर्जननी [1]जगत्सु ।
महीकलापोद्वहनादिपात्रौ
पुत्रौ ययोस्त्वं नरलोकपालः ॥ ५ ॥

रूपेण तेजस्वितयाऽऽर्जवेन
प्रियंवदत्वेन तवामुना च ।
दिलीप-दुष्यन्त-भगीरथादीन्
तानादिराजान् झगिति स्मरामि ॥ ६ ॥

समानभावैस्त्रिभिरेव मन्ये
समुद्रनेमिर्वसुधा धृतेयम् ।
भुजङ्गमेन्द्रेण च मेरुणा च
दोष्णा च मौर्वीकिणशोभिना ते ॥ ७ ॥

त्वयि स्थिते सम्प्रति जागरूके
जगद्विधेयेषु विधूतचिन्तः ।
करोति नेत्रे भगवानवैमि
स योगनिद्रामुकुले मुकुन्दः ॥ ८ ॥

न किञ्चिदिक्ष्वाकुकुलावतीर्णात्
रथाङ्गपाणेः परिहीयते ते ।
अजायताम्भोजदृशा वियोगो
वने यथा तस्य तथा तवापि ॥ ९ ॥

---

१. K reads सवत्सराजाभिर्जनय for स वत्स, जाते जनकः २ T reads कृतात्मना for कृतात्मा ३ T. reads °पात्रि पुत्रे ययुस्त्वनरलोकपाल for °पात्रो पुत्रौ ययोस्त्वं नरलोकपाल ४ T. reads द्रागिति for झगिति ५ I. reads °चिन्त. for °चिन्त, while T omits य ६ K. reads फणीन्द्रे for मुकुन्द.

अकृत्रिमोऽयं गुणवत्सु जाने
जात्यैव ते पार्थिव पक्षपातः ।
यत् प्रौढलावण्यसुधास्रवन्त्या
तया विना चेतसि ताम्यसीव ॥ १० ॥

अलं विषादेन घनाधिरूढा
ललामभूता जगतोऽखिलस्य ।
तवाङ्कमभ्येष्यति साऽचिरेण
शशिप्रभा पार्थिवकैरवस्य ॥ ११ ॥

इतोऽद्य यान्ती पुरतो मया सा
दृष्टा भुजङ्गाधिपतेस्तनूजा ।
उदग्रभोगैरहिभिः परीता
लतेव तन्वी हरिचन्दनस्य ॥ १२ ॥

उद्दण्डहेमाम्बुरुहासु खेलत्
एतासु लीलागृहदीर्घिकासु ।
समुत्कयन्ती कलहंसयूथम्
आमञ्जुना नूपुरसिञ्जितेन ॥ १३ ॥

व्यापारयन्ती वलितानेन्दुः
पश्चाद्दृशौ केतकपत्रदीर्घे ।
इतस्ततः शून्यतया स्खलन्ती
समेऽपि मार्गे ददती पदानि ॥ १४ ॥

---

१ I. reads °सुजोनजा° for °सु जाने जा°. २ K. reads यन्मुग्ध° for यत्प्रौढ°.
३. T. reads सभाधिरूढां for घनाधिरूढा. ४ T. reads पलिता° for वलिता°.
५. I. reads °दीर्घेण for °दीर्घे. ६. K. reads दधती for ददती.

विस्रस्तमाल्यः श्लथबन्धनत्वात्
अंसावकीर्णां कबरीं वहन्ती ।
कलिन्दकन्यामसृणोर्मिनीलां
निस्त्रिंशलेखामिव मन्मथस्य ॥ १५ ॥

मुखं निशाप्रातमिवारविन्दं
विषादवीतप्रभमुद्वहन्ती ।
विलुम्पती निःश्वसितेन कान्तिम्
आपाटलस्याधरपल्लवस्य ॥ १६ ॥

उन्मोचयन्तीमलकाग्रमेत्य
लग्नं चलत्कुण्डलरत्नकोटौ ।
किमप्युदञ्चद्दशनांशुलेखा
सखीं शनैस्सस्मितमालपन्ती ॥ १७ ॥

सुधासितं क्षौममिवास्तृतं तं
नखांशुरेखावलयच्छलेन ।
कृत्वा दधानोपरि पाणिपद्मम्
उदग्रकम्पस्य कुचद्वयस्य ॥ १८ ॥

गतानि सद्यः श्लथतां सखीभिर्
निरस्य साकूतविलोकितानि ।
क्रमेण किञ्चित् प्रतिसारयन्ती
विलज्जमाना मणिकङ्कणानि ॥ १९ ॥

---

१ T. reads 'नीला निश्चिन्तलेखा[illegible]' for नीलां निस्त्रिंशलेखामिव मन्म-थस्य. २ T. reads विषाद° for विषाद°. ३ T. reads °पाटलस्य for °पाण्डरस्य

अशोकपुष्पग्रथितां दधाना
मालम्बमालामवलग्नमध्या ।[1]
आरोपितज्येव जगज्जयाय
स्वचापलेखा मकरध्वजेन ॥ २० ॥

आर्द्रव्रणाङ्कस्य कृपार्द्रचित्ता[2]
केलीमृगस्य स्वयमेव तस्यै ।[3]
आचुम्बती पाण्डुकपोललेखं
चलत्सदूर्वाङ्कुरमर्पयन्ती ॥ २१ ॥[4]

मार्गेषु रूढासु निरूढभावात्[5][6]
द्विरेफसम्पातसमाकुलाऽपि ।
लतासु पुष्पावचयच्छलेन[7]
पदे पदे वत्स विलम्बमाना ॥ २२ ॥
कुलकम् ।[8]

त्वदीयविश्लेषमवाप्य बाला
सा लक्ष्यते किञ्चिदनिर्वृतेव ।[9]
भवादृशामेकपदे वियोगो
न कस्य राजेन्द्र, मनो दुनोति ॥ २३ ॥
पृथुप्रतापस्सविता यथैव[10]
यथा कलानां निधिरोषधीशः ।

१ T. reads °मवलम्ब° for °मवलग्न°. २ T. reads °चिन्ता for °चित्ता ३ K reads स्वयमागतस्य for स्वयमेव तस्य ४ I. reads °मर्पयन्ती for °मर्पयन्ती. ५ I. reads मार्गान्तरूढाविगूढभावा for मार्गेषु रूढासु निरूढभावा ६ K. reads °भावा for °भावात् ७ T. reads °पचय° for °वचय°. ८ K. and T. do not insert कुलकम् ९ K. reads सीव्रम् for किञ्चित् १० K and T. read यथैव for यथैव.

यथा वसन्तः सुमनोऽनुकूलस्
तथाऽसि भूमिः स्पृहणीयतायाः ॥ २४ ॥

नायकवाक्यम्।

इति क्षितीशश्रुतिशुक्तिपेयाम्
उदीर्य वाचं विरराम रेवा।
स च स्मितद्योतितदन्तमेवम्
उवाच तां मध्यमलोकपालः ॥ २५ ॥

स्थाने यदाह्लादयसि प्रपन्नं
पीयूषधारामधुरैर्वचोभिः।
सुधैकसूतिस्स यदाकरस्ते
चण्डीशचूडाभरणं शशाङ्कः ॥ २६ ॥

ऋजुः प्रकृत्याऽसि परं तदम्ब
वीचीषु पर्याप्तमनार्जवं ते।
न केवलं सा पयसि प्रसक्तिर्
आलक्ष्यते ते बत मानसेऽपि ॥ २७ ॥

या जूटमध्ये च शशाङ्कमौलेर्
उन्निद्रकुन्दस्रगिवाऽवभाति।

---

१. I. reads °पीताम् for °पेयाम्, while T. reads °पीतां निपीय वाचं for पेयामुदीर्य वाचं. २. I. omits श; while T. substitutes धा for श ३. T. reads प्रयत्न for प्रपन्नं. ४. T. reads °करणं for °भरणं. ५ I. reads सदैव for तदम्ब. ६. I. substitutes °य° for °प्त°. ७. I. reads प्रसक्तिर् for प्रसक्तिर् ८ I. omits ते, but in the marginal correction appears मू for the same. ९. I. reads °जूट° for जूट;° while K. reads या जूटमध्येऽम्ब for या जूटमध्ये च and in the margin appears another reading जूटमध्यादम्ब for जूटमध्ये च.

तामप्यनीव त्रिजगत्प्रतीक्ष्यां
त्रिःस्रोतसं पुण्यतयाऽतिशेषे ॥ २८ ॥

यासोऽस्य शक्तिः प्रसराम्बुपङ्के
त्वया वृता धर्मविहारवीथिः ।
सलीलमुद्धूलकुलाचलेयम्
मही महासूकरदंष्ट्र एव ॥ २९ ॥

भवादृशानां महतां नदीनाम्
अद्रिर्जगत्यस्तमितोपसर्गे ।
सुखं सदैवासुरजित् समुद्रे
निद्राति पर्यङ्कितपन्नगेन्द्रः ॥ ३० ॥

असन्तमप्यम्ब मयि प्रसन्ना
सम्भावनाभारमहो निधत्से ।
अस्त्येव भक्तेष्वतिवत्सलत्वात्
बलाद्गुणारोपणकौतुकं ते ॥ ३१ ॥

अनेन मे कोऽपि हृदि प्रहर्षस्
तव प्रसादातिशयेन जातः ।
अनार्द्रतामिन्दुमरीचिसख्ये
कियच्चिरं चन्द्रमणिर्बिभर्ति ॥ ३२ ॥

---

१ T does not insert this stanza, while I reads—
आसास्य शक्ति प्रसरा वयं के
स्त्वया धृता धर्मविहारवीथि ।

२. I. reads सदेवासुर° for सदैवासुर°. ३ T. reads पर्यङ्कत° for पर्यङ्कित°.
४ K reads प्रपन्ने and T. °हार° for प्रसन्ना and °भार° respectively. ५ T. reads अस्त्येव भक्तोज्झित° for अस्त्येव भक्तेष्वति°. ६ K reads भात for जात

विधाय तत्तादृशमिन्द्रजालं
सा केन नीता फणिराजकन्या।
अपश्यतो हेतुमिहोपपन्नं
किमप्यहो विस्मयते मनो मे ॥ २३ ॥
अज्ञानमस्मिन्विषये किमन्यत्
ममैतदर्हस्यपनेतुमम्ब।
दिनान्तसम्मूर्च्छितमन्धकारं
निशामुखस्येव शशाङ्कलेखा ॥ २४ ॥

पुनर्नर्मदावाक्यम्।

उक्त्वेति तूष्णीमभवन्नृसोमः
सा सोममूर्तिस्सरिदित्युवाच।
अत्रेतिवृत्तं कथयाम्यशेषं
निशम्यतां मालवलोकपाले ॥ २५ ॥

गृहदेवतावाचः।

यदैव सा तर्जितचन्द्रकान्तिर्
अजायतेन्दीवरपत्रनेत्रा।
चित्रस्थितानां गृहदेवतानाम्
इति स्फुरन्ति स्म तदैव वाचः ॥ २६ ॥
रत्नाकरत्वं भुजगेन्द्र, जातं
कन्या तव श्रीः शुभलक्षणेयम्।

---

१. T. reads कन्या for नीता. २. T. reads उक्त्वैव for उक्त्वेति. ३ T. and I. read °पाल for °पाले ४ T reads गृहदेवतानां इत्युच्चरन्ति स्म तदैव for गृहदेवतानामिति स्फुरन्ति स्म तदैव. ५ I. reads रत्नाकरस्त्वं भुजगेन्द्र जात कन्या मम and K. रत्नाकरस्त्वे भुजगेन्द्र जात कन्या यत for रत्नाकरत्वं भुजगेन्द्र जातं कन्या तव.

वक्षःस्थलं मध्यमलोकभर्तुर्
त्रिभूपयित्री पुरुषोत्तमस्य ॥ ३७ ॥

भुजङ्गवंशार्णवकौमुदीयम्
इयं पताकाऽस्य रसातलस्य ।
उपागतेयं निधनाग्रदूती
वज्राङ्कुशस्यासुरपुङ्गवस्य ॥ ३८ ॥

कुलकम् ।

स्ववीर्यपर्यस्तपुरन्दरेण
तेनासुरेन्द्रेण कदर्थितस्य ।
तेऽश्चिरादुच्छ्वसितं तदा भूत्
इति श्रुते भोगभृतां कुलस्य ॥ ३९ ॥

तद्देहकान्तिस्तिमिरं व्यनैषीत्
यदत्र मोघीकृतरत्नदीपा ।
पित्रा तदस्याः कृतमर्थयुक्तम्
आल्हादनं नाम शशिप्रभेति ॥ ४० ॥

ततस्सुधासूतिकराभिरामैर्
गुणैः परीता सहजन्मभिः सा ।
शनैश्शनैर्वृद्धिमवापदत्र
रसातले बालमृणालिकेव ॥ ४१ ॥

---

१ K. reads विन्ध्याकलस्या. for °स्य रसातलस्य. २. K. °दुर्मदस्य for °पुङ्गवस्य ३ This do not appear in K. and T. ४. I. reads चेत for तेज and substitutes श्च for श्चु. ५. T. reads श्रुते for श्रुते ६. K. and T. read चिरात for पित्रा. ७. T. reads मधाऽऽप° for मवाप° and substitutes भान° for बाल°.

शशिप्रभापितुः प्रतिज्ञा ।

यदर्थिताऽभूदनुबद्धमानसैस्
सुरैश्च सिद्धैश्च महोरगैश्च ।
तेषां पुरस्तादकृत व्यवस्थाम्
इत्येकदा संसदि पन्नगेन्द्रः ॥ ४२ ॥

गुऽस्तोभित्तौ यत्रिदशारिवीरैर्
वज्राङ्कुशाख्यस्य महासुरस्य ।
अमूत लीलागृहदीर्घिकेर्ह
हैमं हरेर्नाभिरिवारविन्दम् ॥ ४३ ॥

आनीय तद्यो दुहितुर्ममास्याः
कर्णावतंसप्रणयीकरोति ।
तस्येयमिष्वासभृतः कलत्रं
पार्थस्य पाञ्चालनृपात्मजेव ॥ ४४ ॥
कुलकम् ।

तेनैवमुक्ते च तदा परेषु
तमर्थमङ्गीकृतवान्न कोऽपि ।
वन्यद्विपादुद्रतदानराजेः
कः कुम्भमुक्ताफलमाददीत ॥ ४५ ॥

ततः प्रभृत्यद्भुतरूपरेखा
सा बालिकाभूदवरा वरापि ।

१ T. and I. read तदर्थिभावादनुबध्यमानैस् for यदर्थिताऽभूदनुबद्धमानसैस् २. T. reads सदसि for संसदि. ३. T. reads °हितो for °भित्तो ४. T. reads °केन for °केह. ५ I. reads कलावतंस° for कर्णावतंस°. ६ T. and K. do not insert this. ७. K. reads °माहरेत for °माददीत. ८. T. reads पालिका for बालिका.

चित्ते वचस्तत् कुलदेवतानां
कृत्वापि तस्यास्स च नान्वशीत ॥ ४६ ॥

सम्प्रत्यवैमि प्रथिता यदोऽस्तः
स्वर्गे च भूमौ च भुवस्तले च ।
नीतोऽसि नेत्रातिथितां त्वमस्याः
पुण्येन जन्मान्तरसम्भृतेन ॥ ४७ ॥

आनेतुकामेन भवन्तमत्र
निजं वचस्तन्नयता प्रतिष्ठाम् ।
आत्मप्रयत्नेन तथा स मन्ये
फणीश्वरेणोपकृतः प्रपञ्चः ॥ ४८ ॥

एकः क्षितौ साहसिकस्त्वमेव
नान्योऽस्ति राजन्नवसाहसाङ्कः ॥
निसर्गदुर्गामपि भूमिमेतां
स्वोद्यानवीथीमिव यः प्रविष्टः ॥ ४९ ॥

तदस्य कार्यस्य पुरस्कृतस्य
यतस्व सीमान्तविलोकनाय ।
विगाहमानोऽम्बरमर्धमार्गे
निवर्तते जातु किमुष्णरश्मिः ॥ ५० ॥

इतोऽस्ति गव्यूतिशतार्धमात्रं
गत्वा पुरी रत्नवतीति नाम्ना ।

१ T. reads प्रथिता च रत्नभूरसि स्वर्गे च for प्रथिता यदोऽस्तः स्वर्गे च भूमौ च. २. I. reads आत्त° for आत्म°. ३. I. substitutes °व° for °प°, while T. reads अपकृत for उपकृत. ४ T. reads सौद्यान° for स्वोद्यान°. ५ T. reads °मध्य° for °मर्ध°, while in I. there appear three letters after मर्ध, namely, त्यज.

विनिर्मिता शिल्पकलामयेन
मयेन या नाकजिगीषयेव ॥ ५१ ॥
तस्या ऽसुरेन्द्रस्य नराधिपेन्द्र
जगद्गुहः सा किल राजधानी ।
भमोधितस्याब्जभुवा वरेण
रणेष्ववध्यो मरुतां भवेति ॥ ५२ ॥
स मौलिरत्नानि महोरगाणाम्
उत्खाय चोत्खाय च कौतुकेन ।
करोति निर्वासितनायकेषु
निजाङ्गनाहारलतान्तरेषु ॥ ५३ ॥
स बाष्पपर्याकुललोचनानि
निःश्वासभिन्नाधरपल्लवानि ।
करोति वक्त्राण्यमराङ्गनानाम्
उत्सन्नलीलास्मितचन्द्रिकाणि ॥ ५४ ॥
कृताङ्गदः कम्बल-कालियाभ्यां
यज्ञोपवीतीकृतशङ्खचूडः ।
स तक्षकापादितकण्टभूषो
बिभर्ति लीलामशिवद्विषस्य ॥ ५५ ॥
आस्तां किमन्यैः फणिभिस्स चिन्त्यम्
तस्यापि शेषस्य च वासुकेश्च ।

१. T. reads रत्न॰ for शिल्प॰ while K reads शिल्पकलापेरण for शिल्पकलामयेन २. I omits this half stanza —

करोति वक्त्राण्यमराङ्गनानाम् ।
उत्सन्नलीलास्मितचन्द्रिकाणि ॥ ५४ ॥

but it appears in the correction.

राहुर्यथा विश्वभयैकहेतुस्
ताराधिपस्याहिमदीधितेश्च ॥ ५६ ॥
खगेन्द्रभर्त्तेन तथा तथा च
न सर्पयज्ञो जनमेजयस्य ।
निधानमातङ्कपरम्पराणां
जातो यथा सम्प्रति नागलोकः ॥ ५७ ॥
हरेस्त्वमंशोऽत्र कृतावतारस्
तस्यासुरेन्द्रस्य निबर्हणाय ।
अवैमि लोकत्रयकण्टकस्य
लङ्काधिपस्येव स मैथिलीशः ॥ ५८ ॥
श्रीकण्ठ-वैकुण्ठ-पुरन्दराद्यैर्
उपेक्षितं यत्त्रिदशैरशक्त्या ।
कृतस्य तस्यास्य भरं विसोढुं
सम्भाव्यसे मे नृपते त्वमेव ॥ ५९ ॥
किमन्यदुत्तिष्ठ गृहाण यात्रां
वज्राङ्कुशां प्रत्यमितप्रताप ।
तद्यावतंसीकुरु हेमपद्मम्
आनीय भूयाश्च शशिप्रभायाः ॥ ६० ॥
सा ते समासादितसाहसस्य
वत्साङ्कमभ्येतु फणीन्द्रकन्या ।
सीता यथा दाशरथेस्सलीलम्
आरोपितत्र्यम्बककार्मुकस्य ॥ ६१ ॥

---

१. I. reads °यत्तो for °यत्तं. २. T. reads भय for अन्य and K. अलि for the same ३. T. reads मत्यर्यते for मे नृपते

अगाधपातालतलोद्गतानि
विनिद्रकुन्दच्छदसुन्दराणि ।
लोकद्वये सम्प्रति ते यशांसि
आकल्पवल्लीफलवच्चरन्तु ॥ ६२ ॥

प्रसादमासेन चिराद्विलीने
तस्मिन् सुरारातियशोपरोधे ।
मुखेन्दुना पन्नगसुन्दरीणां
पुनः समागच्छतु पत्रलेखा ॥ ६३ ॥

आसीत् पुरस्तात्त्रिपुरावभङ्गे
यन्मङ्गलं बालमृगाङ्कमौलेः ।
महासुरैर्भाविनि साम्पराये
तवास्तु तत् संयुगजामदग्न्य ॥ ६४ ॥

पन्थाश्शिवो ऽयं पुरतो ऽत्र गन्ता
वङ्कुर्मुनिर्लोचनगोचरं ते ।
उपाचरेस्तं च तथाविधानां
भक्ति हि गां कामदुहामुशन्ति ॥ ६५ ॥

इत्युदीर्य मणिकान्तिकन्दलीः
कल्पितं त्रिदशचापमस्य सा ।
आ मुमोच निजकङ्कणं भुजे
ज्याकिणाङ्ककठिणीकृतत्वचि ॥ ६६ ॥

---

१. I. reads °लता° for °तलो°. २. T. and I. read °फलसञ्चरन्तु for °फलवच्चरन्तु. ३. K. and T. read पुर for पुन. ४. T. reads °जामदग्न्य, for °जामदग्न्य ५. I. reads °मुषन्ति for °मुशन्ति ६. K. and T. read °कन्दलैः for °कन्दली.

नर्मदोक्तस्वीकारः ।

अवददथ स साहसोन्मुखस्ताम्
इह हि वयं वचसि स्थितास्तवेति ।
तडिदिव न चिरादुदीरिताशीस्
सरिदपि साऽस्य पुरस्तिरोबभूव ॥ ६७ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये नर्मदासंवादो नाम नवमः सर्गः ॥ ९ ॥



१. T. omits स. २. K. reads झटिति च न चिरात् and T. तटिति वनचरात् for तडिदिव न चिरात्. ३. T. reads इति कालदासस्य कृतौ साहसाङ्कचरितेऽष्टमः सर्गः, I. इति परिमलस्य नवसाहसाङ्कचरिते नर्मदासंवादो नवम सर्गः.

# अथ दशमः सर्गः ।

नायकस्य रमाङ्गदम्प्रति प्रश्न.।

अथ मेकलाचलसुतातिरोहितौ
अतिमात्रविस्मयरसार्द्रमानसः ।
दशनच्छविच्छुरितपाटलाधरस्
स रमाङ्गदं नृपतिरित्यवोचत ॥ १ ॥

अधिरोहति स्वयमचिन्तिताऽप्यहो
शुभसम्पदङ्कमपराङ्मुखे विधौ ।
सवपुर्विलोचनपथं यदावयोर्
अमृतांशुमूर्तिरियमापदापगा ॥ २ ॥

इदमिन्द्रजालमिति मे समुत्थिताम्
मतिमेतदर्पितमुदारया तया ।
विकसन्मरीचिरचितेन्द्रकार्मुकं
करवर्ति रत्नवलयं विलुम्पति ॥ ३ ॥

अयि मेकलाद्रितनयापुरस्कृते
क्रियते किमत्र वद कृत्यवस्तुनि ।
तव यत् सदा नयरहस्यवेदिनो
न प्रियभरन्यनहृष्णांसुले पथि ॥ ४ ॥

रमाङ्गदवाक्यम्।

इति पार्थिवेन कथिते दधन्मनाक्<br>
पुलकेन चुम्बितकपोलमाननम्।<br>
इदमात्तनीतिपथमाददे वचः<br>
स्मितपुष्पिताधरदलो रमाङ्गदः॥ ५॥

इह किं प्रतिस्फुरति मे तवाग्रतो<br>
नयशास्त्रनीरनिधिपारदृश्वनः।<br>
अवलीढविश्वतमसः पुरो रवेर्<br>
न हि जातु दीपकशिखा प्रकाशते॥ ६॥

विषये ऽत्र मौनमुचितं हि मादृशाम्<br>
अवशस्तथापि कथयामि किञ्चन।<br>
क्षितिपालमौलिमणिवेणिकातिथेस्<br>
तव केन शासनमिदं विलङ्घ्यते॥ ७॥

प्रथमं हि मण्डलमखण्डशक्तिभिर्<br>
विजिगीषुभिः स्वमभितः प्रसाध्यते।<br>
परमण्डले तदनु नीतिपारगैर्<br>
अवनीपुरन्दर, करः प्रसार्यते॥ ८॥

तदपास्यमेवमवितर्कितोत्थिते<br>
परिपन्थिनामिह विधेयवस्तुनि।<br>
यदि नाभविष्यदभिमानशालिनस्<br>
तव राज्यमुद्धृतसमस्तकण्टकम्॥ ९॥

---

१ I reads स्नपितेन for पुलकेन. २ T. reads °मुदित for °चुम्बित ३. T. and I. read °तिथि for °तिथे. ४ T. reads प्रसाद्यते for प्रसाध्यते ५ K reads °मवितर्कितोत्थिते for °मवितर्कितोत्थिते ६ I reads परिपन्थिता° for परिपन्थिना°, while K reads इव for इह. ७ I. omits two letters after क

श्रुत-शक्तिसङ्कलितमन्त्रनिश्चयैर्
उपलब्धषड्गुणविवेकवर्त्मभिः ।
तदुपायतत्त्वमधिगम्य धूः क्षितिस्
तव मन्त्रिभिर्नृप दुरुद्वहोह्यते ॥ १० ॥

अतिसान्द्रकाञ्चनमरीचिपिञ्जलं
दिगुपाहितैर्मधुरपत्रशोभिनः ।
तव कोशमुत्सृजति न क्षणं रमा
परमारवंशसरसीसरोरुह ॥ ११ ॥

प्रियकीर्तयो जयपवित्रिताशयास्
तरसा तृणीकृतजगत्त्रया युधि ।
जगतीविशेषक तवानुजीविनो
निवसन्त्यवन्तिविषये सहस्रशः ॥ १२ ॥

पृथिवीभृतः प्रथितविक्रमेण ये
गमितास्त्वया वशमुपायसम्पदा ।
नयवर्त्मगाः क्षितिपते तवान्यथा
न भवन्ति भाविसमराभिशङ्कया ॥ १३ ॥

अपकर्तुमत्र समये तवात्तभीर्
मनसापि हूणनृपतिर्न वाञ्छति ।
इभकुम्भभित्तिदलनोद्यमे हरेर्
न कपिः कदाचन सटां विकर्षति ॥ १४ ॥

१ T reads उपलब्धि° for उपलब्ध°. २ h. reads द्विगुणाहित° for दिगुपाहित°. ३ T reads कोष° for कोश° ४ L. reads सुरसा for तरसा ५ h. and T. read नयवर्त्मना for नयवर्त्मगाः ६ T. reads इह for इभ°. ७ L reads हरे न कपिः कदाचन सटा for हरेर्न कपिः कदाचन सटां and it seems throughout incorrect, while h. and T. read सट्यं for सटां

असिकान्तिजालजटिलाग्रबाहुना
रणसीम्नि नाथ निहतेषु भर्तृषु ।
भवताऽत्र वागडवधूजनः कृतो
रतिसन्धिविग्रहकथापराङ्मुखः ॥ १५ ॥

अधुनापि देव मुरलाङ्गनाजनैर्
विजयप्रशस्तिरिव लिख्यते तव ।
गलदञ्जनाश्रुपृषतावलिच्छलाल्
लसदिन्दुपाण्डुषु कपोलभित्तिषु ॥ १६ ॥

रभसादपास्य मणिकङ्कणावलीः
कनकारविन्दकटकेषु ते ऽसिना ।
न किमर्पितानि नृप लाटयोषितां
स्फटिकाक्षसूत्रवलयानि पाणिषु ॥ १७ ॥

नयनाम्बुभिः स्नपितधूसराधराः
प्रतिबद्धरूक्षनलिनैकवेणयः ।
निहिता न किं महति शोकसागरे
जगतीन्द्र कोसलपतेः पुरन्ध्रयः ॥ १८ ॥

---

१ T. and I. read °बाल° for °जाल°. २ I reads निहितेषु for निहतेषु ३ I. substitutes °ला° for °ना° and omits स in the word प्रशस्ति ४ I reads °पृषते पतितच्छला लसदिन्दुपाण्डुकपोल° for °पृषतावलिच्छलाल् लसदिन्दुपाण्डुषु कपोल° ५ T. reads °वलि: for °वली. ६ I reads °लइहेतु and T °कर्हेतु for °कटकेषु ७ T reads °योषित for °योषिता ८ T. mutilates one letter before वे and I reads °वेणयः for °वेणयः ९ T. reads निहता स्वयं and I निहितास्त्वया for निहिता न किं १० I reads कोशल° for कोसल° and T कोसिल for the same ११ After this stanza I. inserts :—

चरितेन वैरितिमिरद्रुहाभिनव
स च नाथ विक्रमसमुल्लमालिना ।
निहितास्त्वया महति शोकसागरे
जगतीन्द्र कोसलपत पुरन्ध्रय ॥

It is evident from this that I repeats the second half of 18th stanza and the first half of the 19th stanza.

उदितेन वैरितिमिरद्रुहा ऽभितस्
तव नाथ विक्रममयूखमालिना ।
गमिताः प्रभावलयशून्यतां क्षिति-
ष्वपरान्तपार्थिववधूमुखेन्दवः ॥ १९ ॥

अतिवेलमुत्तरदिगन्तवर्तिना
समरश्रमाभ्युदितघर्मबिन्दुना ।
शरदिन्दुनिर्मलमपायि भूभृताम्
असिपत्रपात्रपतितं त्वया यशः ॥ २० ॥

निजरन्ध्रगोपनपटीयसाऽभितः
पररन्ध्रदृष्टिपटुचारचक्षुषा ।
नयभित्तिमात्मभुवा भुवस्तले
भवता परं कथय को विरुद्धचते ॥ २१ ॥

नरदेव दैवमधिकृत्य या विपत्
निपमान्यवर्णितविषये कथञ्चन ।
शशिगुञ्जगन्धरशिवा किमन्यते
गत मा वसिष्ठमहिमा पुरोधसा ॥ २२ ॥

इति किञ्चिदेव न तत्र स्वमण्डले
नृप चिन्त्यमस्त्युदितशक्तिसम्पदः ।
अधुना तु नीतिनिहितेन चेतसा
फणिलोककृत्यमिदमेव चिन्त्यताम् ॥ २४ ॥

प्रभुशक्तिरुद्यमपरत्वमर्पिते-
स्त्रिजगच्चमत्कृतिरहङ्कृतिश्च सा ।
असुरस्य तस्य कथिता नरेन्द्र ते
नगरी च मेकलनगेन्द्रकन्यया ॥ २५ ॥

अभिगम्य एव स तवाधुना रिपुर्
मरुतामुदारनिजकार्यसिद्धये ।
श्रुतिलग्नगन्धगजबृंहितः क्षणं
नृप केसरी कथय किं विलम्बते ॥ २६ ॥

नवसाहसाङ्क, न तवाऽसुरादहं
कलयामि सम्प्रति किमप्यसादृशम् ।
विधुतिः कदाचन विभो न भूभृतः
कलविङ्कपक्षपवनेन शङ्क्यते ॥ २७ ॥

भवता यदोच्चलित एव दक्षिणश्
चरणस्तदैव सुरवैरियोषिताम् ।
विगलन्ति देव नयनोदबिन्दवः
शरदिन्दुपाण्डुनि कपोलमण्डले ॥ २८ ॥

---

१ I. substitutes व for चे, while T. निहतेन for निहितेन　२ T. reads °मरित for °मर्पित°.　३ T. reads मेखल° for मेकल°.　४. K. reads °परमारराम for °मरुतामुदार°　५ I reads °बृंहित for बृंहित.　६ K. reads नय° for नृप　७ T. reads नवा° for नव°.　८ I reads संप्रति for सम्प्रति　९ K. reads शङ्कयते for शङ्क्यते

उदितेन वैरितिमिरद्रुहा अभितस्
तव नाथ विक्रममयूखमालिना ।
गमिताः प्रभावलयशून्यतां छिंटि-
त्यपरान्तपार्थिववधूमुखेन्दवः ॥ १९ ॥

अतिवेलमुत्तरदिगन्तवर्तिना
समरश्रमाभ्युदितघर्मबिन्दुना ।
शारदिन्दुनिर्मलमपायि भूभृताम्
असिपत्रपात्रपतितं त्वया यशः ॥ २० ॥

निजरन्ध्रगोपनपटीयसाऽभितः
पररन्ध्रदृष्टिपटुचारचक्षुषा ।
नयभिन्नसाहसभुवा भुवस्तले
भवता समं कथय को विरुद्ध्यते ॥ २१ ॥

नरदेव दैवमधिकृत्य या विपत्
निपतत्यवन्तिविषये कथञ्चन ।
शिखिमुक्तमन्त्रहविषा विहन्यते
तव सा वसिष्ठमहसा पुरोधसा ॥ २२ ॥

नृप वासराणि निरुपप्लवाः प्रजाः
सुखमात्मकर्मणि रता नयन्ति यत् ।
विजयं जयैकसुहृदोऽस्य सर्वदा
ननु कार्मुकस्य तव तद्विजृम्भितम् ॥ २३ ॥

---

१ I reads °द्रुमाभितस् and I. °प्रभाभितस्ः both for °द्रुहाऽभितस् २ I. reads शारिशि and T. शशिशि for शारदि ३ K. and T. read °पत्र° for °पात्र°. ४ I° reads °त्यवर्ति° for °त्यवन्ति°. ५. K. reads °भुक्त° for °मुक्त° and I. °सत्र. for °मन्त्र°. ६. I. reads न नु for ननु

इति किञ्चिदेव न तव स्वमण्डले
नृप चिन्त्यमस्त्युदितशक्तिसम्पदः।
अधुना तु नीतिनिहितेन चेतसा
फणिलोककृत्यमिदमेव चिन्त्यताम् ॥ २४ ॥

प्रभुशक्तिरुद्यमपरस्त्वमर्पितै-
स्त्रिजगच्चमत्कृतिरहङ्कृतिश्च सा।
असुरस्य तस्य कथिता नरेन्द्र ते
नगरी च मेकलनगेन्द्रकन्यया ॥ २५ ॥

अभिगम्य एव स तवाधुना रिपुर्
मरुतामुदारनिजकार्यसिद्धये।
श्रुतिलग्नगन्धगजबृंहितः क्षणं
नृप केसरी कथय किं विलम्बते ॥ २६ ॥

नवसाहसाङ्क, न तवाऽसुरादहं
कलयामि सम्प्रति किमप्यतादृशम्।
विधुतिः कदाचन विभो न भूभृतः
कलविङ्कपक्षपवनेन शङ्क्यते ॥ २७ ॥

भवता यदेव बलिन एव दक्षिणश्
चरणस्तदैव सुरवैरियोषिताम्।
विगलन्ति देव नयनोदबिन्दवः
शरदिन्दुपाण्डुनि कपोलमण्डले ॥ २८ ॥

---

१ I. substitutes च for चे, while T. निहतेन for निहितेन २ T. reads °म रित for °मुदित° ३ T. reads मेखल° for मेकल°. ४. K. reads °परमार-यात्र for °मरुतामुदार° ५ I. reads °बृंहित for बृंहित ६ K. reads भव° for तव ७ T. reads यदा° for यदा° ८ I reads संप्रति for सम्प्रति ९ K reads शङ्कते for शङ्क्यते

विजयैकसद्मनि गुणः शरासने
तव यावदत्र न नृपाधिरोहति।
तुहिनच्छटाधवलचामरस्मिता
विलसन्ति तावदसुरालये श्रियः ॥ २९ ॥

कनकारविन्दमरविन्दलोचन
प्रणयेन नैव स समर्पयिष्यति।
सुरनिर्जयार्जितमदावृते ऽन्तरं
लभते न सोम किल तादृशां हृदि ॥ ३० ॥

भवतः कुतोऽपि नृप यावदागमं
न स वेत्ति तावदभियोक्तुमर्हसि।
सहसाऽन्यथा रहसि मन्त्रिबोधितः
परितः स्वदुर्गघटने यतिष्यते ॥ ३१ ॥

कृतनूतनार्गलकपाटसम्पुटां
सुभटैरुदायुधकरैरधिष्ठिताम्।
परितस्सुखातपरिखां पुनः पुरीं •
रचितैकदुर्गमपथां विधास्यति ॥ ३२ ॥

वलितेऽपि किञ्चन धनुःपरिग्रहे
भुवनत्रयप्रथितसाहसे त्वयि।

---

१ T substitutes यत्र for यावदत्र omitting two letters २ I reads असुरालये श्रिय and T. असुरालयश्रिय both for असुरालये श्रिय ३ T. reads धाम for साम ४ I. reads दसावन्यसावे° for न स वेत्ति ताव° ५ T reads मन्त्र and I मन्त्र° for मन्त्रि°. ६ I. omits four letters here and substitutes सुदुर्गघटने यतिष्यते for परितः स्वदुर्गघटने यतिष्यते, while T wrongly reads घटने यतिष्यते for घटने यतिष्यते ७. I and T read °कवाट° for °कपाट°. ८ K. reads सु° for स, while I. substitutes सा for स्सा ९ I. reads च-लिते for वलिते.

अपि जायते धृतिविपर्ययो हरेर्
असुरेषु कैव गणना तपस्विषु ॥ ३३ ॥

नियतं नरेन्द्र, विदधत्फणामणि-
स्फुरदंशुसूत्रितनवातपं नभः ।
सुरवैरिवीर्यदृढमत्सरं पुरः
फणिसैन्यमाजि[1]भुवि ते भविष्यति ॥ ३४ ॥

अधुनैव तेऽत्र[2] निजतां व्रजन्ति वा
सुभटाः स्वयं विधिवशेन केचन ।
कपयः पुरा रघुपतेर्यथा वने
हनुमत्पतङ्गतनयाङ्गदादयः ॥ ३५ ॥

यदुदीरितश्च पुरुकुत्सकान्तया
सरितोऽसि वज्रमुनिदर्शनम्प्रति[3] ।
प्रतिभाति किञ्चन ममैव तत्र ते
किमु निर्मुखेङ्गितविदस्तदिङ्गितम् ॥ ३६ ॥

अथवैक एवं[4] विभुरस्यरेर्वधे
ननु धाम तत्[5] स्फुरति शार्ङ्गिणस्त्वयि ।
उदितक्रुधस्त्रिपुरदाहडम्बरे
शरतामवाप किल यत् पिनाकिनः ॥ ३७ ॥

अवलोकयामि शकुनं यथा तथा
तदवैमि पक्ष्मलदृशास्त्वभान्तरे ।

१. I. reads आथि° for आजि°. २ T. reads तेन for तेऽत्र ३. T. reads °धिपं कुमुददर्शन for °सि वज्रमुनिदर्शन ; *while I. substitutes* °विक्रम° for ऽसि वज्र°. ४ I. reads °येव for एव ५ I. reads तत् स्फुरति सा दुहिणस्त्वयि for तत् स्फुरति शार्ङ्गिणस्त्वयि.

हिमत्विषः प्रत्युपकारगोचरो
मरीचिलीढक्रशिमा किमंशुमान् ॥ ६१ ॥
तथाप्ययं देव निजप्रयोजने
लघीयसि क्वापि नियोज्यतां जनः ।
अनूरुमुर्वीतलरत्नदीपकः
किमर्यमा नार्थित सूतकर्मणि ॥ ६२ ॥
तेनैवमुक्तः प्रणयोन्मुखेन
नृपस्त्रपानम्रमुखो बभूव ।
अतादृशानां स्तुतयः प्रकृत्या
मेदं यदुद्दीपयितुं यतन्ते ॥ ६३ ॥

निजवृत्तकथनम् ।

एवं सुधारससमृद्धिमनोहरेण
श्लाघ्येन तेन शशिखण्डसमागमेन ।
कामप्यवापदुमया घटितस्य लक्ष्मीं
स क्ष्मापतिर्झटिति जूट इवाष्टमूर्तेः ॥ ६४ ॥
तेनाथ सूनृतवचःश्रुतये स पृष्टः
पृथ्वीतलागमनहेतुमजानतेव ।
आख्यातवान् स्मितसुधास्नपितोष्ठबिम्बस्
तस्मै निजव्यतिकरं नरलोकपालः ॥ ६५ ॥
विद्याधरस्तदनु स महितोऽपि राज्ञा
नैव स्वधामगमनाभिमुखो बभूव ।

१ T. reads अथापि for तथापि २ T. reads श्रुतय. for स्तुतय. ३ Tr. reads भेदं for मेदं. ४ L reads घटितः स for घटितस्य. ५ L and T. read लक्ष्मीपतिः for स क्ष्मापतिः ; while T. substitutes घटित° for झटिति ६ K. reads आख्यातवानुपस्फुरितोष्ठबिम्ब for आख्यातवान्स्मितसुधास्नपितोष्ठबिम्ब, while T. omits two letters after स्मित°. ७ T reads मन° for नर°.

पूर्वोपकारिणि जनेऽनुपकृत्य किञ्चित्
यान्तो यदुन्नतधियः किमपि त्रपन्ते ॥ ६६ ॥
देव प्रसीद समितिः क्रियतामिदानीं
भृत्यः स्वपादरजसामयमग्रयायी ।
तस्येति वल्गु वचनं वचसा महर्षेः
सम्राट् ततः स कथमप्युररीचकार ॥ ६७ ॥

विद्याधरसैन्यागमनम् ।

आमन्त्रशङ्खपटहस्वनसूचितं प्राक्
सैन्यं क्षणान्निजमथ स्मृतमात्रमेव ।
धौतासिपत्रबहुलांशुलतोपगूढम्[1]
पातालसन्तमसमस्य पुरो बभूव ॥ ६८ ॥

प्रस्थानम् ।

तेनोपपादितमथो रथमुल्पताकम्
अध्यास्य कार्मुकसनाथकरो नरेन्द्रः ।
वज्राङ्कुशप्रमति स वङ्कुमुनिप्रयुक्तः
प्रस्थानमङ्गलविधिर्मसृणं प्रतस्थे ॥ ६९ ॥
लग्नेनाङ्गे युगपदुटजद्वारदेशाददूरे[2]
पश्यन्तीनां मुनिमृगदृशां लोचनांशुत्करेण ।
उद्दामाजिक्रतुमखमहादीक्षया[3] स क्षितीशो
मेध्यामैणत्वचमिव दधन् स क्षणं लक्ष्यतेस्म ॥ ७० ॥
चलितयतिसमाधि त्रस्तसारङ्गशावं
निभृतशुकभृतोच्चैर्नाडमुड्डीनचर्हि ।

१ T. I. and Tr read °गूढ° for °गूढम् २ K reads सुभगउटजद्वारदेशाददूरे for युगपदुटजद्वारदेशाददूरे. ३ T. I. and Tr read °मुख° for °मख° and K. विपक्षीयया for °महादीक्षया

हरिणमिथुनमुक्तान्योन्यकण्डूयनं तत्
मुनिवनमभितोऽभूत् सैन्यकोलाहलेन ॥ ७१ ॥

अथ पथि नवसाहसाङ्कः स विद्याधरैर्वन्दितः
प्रमुदितमुनिकन्यकामुक्तनीवारलाजाञ्जलिः ।
श्रियमधित रमाङ्गदेनान्वितस्तूर्यघोषोर्मिभिः
कुलगिरिकुहरप्रतिध्वानं दीर्घीनिरुन्धन्दिशः ॥ ७२ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ *नवसाहसाङ्कचरिते महाकाव्ये विद्याधराधिपसमागमो* नाम त्रयोदशः सर्गः ॥ १३ ॥

---

# अथ चतुर्दशः सर्गः ।

आकाशारोहणम् ।

अथाश्रमोपान्तमहीं विहाय
नेमिस्वनोत्कण्ठितनीलकण्ठाम् ।
रथो ऽस्य विद्याधरमन्त्रशक्त्या[1]
रथाङ्गपाणेः पदमारुरोह[2] ॥ १ ॥

ससम्भ्रमोत्तम्भितकर्णतालम्[3]
आकर्णितो दिक्करिभिस्सकम्पैः[4] ।
आध्मातशङ्खस्वनमांसलो ऽग्रे[5]
नभ्योदगान्मङ्गलतूर्यघोषः ॥ २ ॥

उदस्य वल्कानि नभस्थलेन
यान्तं तमैक्षन्त तपस्विकन्याः ।
आकर्णविस्तारितमुग्धनेत्राः
पत्रान्तरैराश्रमपादपानाम्[6] ॥ ३ ॥

व्रजन् स विद्याधरवाहिनीनां
मध्ये बभौ मध्यमलोकपालः ।
अनल्पसौन्दर्यसुधैकसूतिः[7]
शशीव नक्षत्रपरम्पराणाम् ॥ ४ ॥

---

१ T reads °यन्त्रगतया for °मन्त्रशक्त्या. २ Tr. reads °मुत्पपात for °मारुरोह ३ h. and T. read °त्रसित° for °त्तम्भित°. ४. K reads सकृप्य for सकम्पैः, while T. omits one letter after सक° ५ K reads °ध्वनि° and T. °ध्वन° both for °स्वन° ६. K reads °विटपानाम् for °पादपानाम् ७ T. reads °सुधीक° for °सुधैक°.

29 .

कुतूहलोल्लासितपक्ष्मलेखा-
न्याकृष्टकर्णोत्पलविभ्रमाणि ।
तस्मिन्नमुच्यन्त नितम्बिनीभिर्
अपाङ्गवल्गीनि विलोचनानि ॥ ५ ॥

रमाङ्गदकृत वर्णनम् ।

अथान्तिकस्थेन स चाभ्यधायि
रमाङ्गदेनेत्थमवन्तिनाथः ।
सहस्रशो खे चलितानि पश्यन्
विद्याधराणां पुरतो बलानि ॥ ६ ॥

हैमं नृप स्यन्दनमुन्नताक्रम्
आक्रम्य रत्नाङ्कितकेतुमेते ।
सहस्ररश्मेरिव वालखिल्या
विद्याधरास्ते परिवारयन्ति ॥ ७ ॥

मज्जन्मर्त्यभ्रमदाविमुक्त-
मन्दारमालाजटिलांसकूटः ।
कुन्दच्छटापाण्डुसटाकलापे
कात्यायनीसिंह इवावभासि ॥ ८ ॥

प्रयाणतूर्यध्वनिरेष किं ते
पातालकुक्षिप्रतिनादसान्द्रः ।

---

१ I reads "मेखलान्तिकृष्ट" for "न्याकृष्ट" २ Tr reads "वल्गीनि विलोकितानि for "वल्गीनि विलोचनानि ३ Tr. reads "सहस्रशः चलितानि for "शो खे चलितानि ४ "T reads "मुन्नताङ्गम् and h. "केतु मेते both for "केतुमेते ५ Tr reads "जटिलांस" for "जटिलांस" ६ Tr. reads "कुन्दच्छटा and h. "कुन्दच्छ for "कुन्दच्छटा while Tr reads "कुन्दच्छटापाण्डुसटा" for "कुन्दच्छटापाण्डुसटा" ७ h reads इवावभासि for इवावभासि ८ T reads "प्रतिनाद" and I "प्रतिनाद" for "प्रतिनाद".

रवैः प्रसर्पत्युत भैरवोऽयम्
अकालकल्पान्तपयोधराणाम् ॥ ९ ॥

मूले भुवः कज्जलधूलिकल्पम्
आलक्ष्यते पश्य निलीनमेतत् ।
नैरन्ध्रविद्याधरमौलिरत्न-
प्रभाङ्कुरप्रोषितमन्धकारम् ॥ १० ॥

आयामिमालामणिकान्तिदण्डैर्
उत्सारयन्तः परितस्तमांसि ।
अमी मरुन्नर्तितचामरास्ते
खमुल्लिखन्तीव खुरैस्तुरङ्गाः ॥ ११ ॥

विहस्य विद्याधरबालिकाभिः
समं विमुक्ता नयनत्रिभागैः ।
प्रस्थानलाजाञ्जलयस्तवैते
रथे पताकास्खलिताः पतन्ति ॥ १२ ॥

नरेन्द्र विद्याधरपुङ्गवानाम्
एते पुरः पश्य कृपाणपट्टाः ।
कालाञ्जनश्यामतयाऽऽश्रयन्ते
तरङ्गतां व्योममहार्णवस्य ॥ १३ ॥

वाचालयन्त्यः ककुभां मुखानि
नादेन जाम्बूनदकिङ्किणीनाम् ।

---

१ Tr reads °स्यति for °त्युत　२ Tr reads नवानम् for निलीनम्　३ T. and I read °प्ररितम् for °प्रोषितम　४ I reads आयान° for आयामि°, while T आयानमाया° for आयामिमाला°　५ K reads निरस्य for विहस्य　६ T reads पुन for पुरः　७ K reads स्वकाञ्जनश्यामतया, T also the same but it has कालाञ्जनश्यामतया for कालाञ्जनश्यामतया　८ K and T read वाचालयन्त्या ककुभा for वाचालयन्त्यः ककुभा

इमा विमानावलयः कथञ्चिद्
अन्योन्यरुद्धप्रसराः प्रयान्ति ॥ १४ ॥

वातवर्णनम्।

आधूतकार्तस्वरकेतुयष्टिर्
एनान्यशोकस्तबकारुणानि।
आनर्तयत्येष पताकिनीनां
वातः पताकांशुकपल्लवानि ॥ १५ ॥

नभश्चराणां व्रजताममीषाम्
अन्योन्यपीनांसविघर्षणेन।
उद्भासितः कुङ्कुमपांसुपूरः
पिशङ्गयत्येष दिशां मुखानि ॥ १६ ॥

प्रेक्षकस्त्रीवर्णनम्।

सरत्नकाञ्चीवलयैर्विलास-
सिंहासनैर्मन्मथपार्थिवस्य।
इतो नितम्बैरसितेक्षणानां
व्यामान्तरं व्योम समाश्रितमिति ॥ १७ ॥

अन्योन्यसङ्घट्टविसूत्रितानि
कुमुद्वतीकान्तकरोपमानि।
एतानि पश्योम्बरतः पतन्ति
विमानमुक्ताफलजालकानि ॥ १८ ॥

एताः प्रयान्त्यः पुरतो विमानैर्
विवर्ध्य मार्गं मुखपङ्कजानि।

---

१. T. reads पव for एव. २. T. reads °कान्तिमानि and Tr. °कान्तिवानि both for °करोपमानि ३. Tr. reads प्रयान्त्य. for प्रयान्त्यः.

अपाङ्गविश्रान्तविलोलतारैस्
त्वां नाथ नेत्राञ्जलिभिः पिबन्ति ॥ १९ ॥

आसामित स्त्वरगामिनीनां
गतागताभ्यां मणिकुण्डलानि ।
भिन्दन्ति विद्याधरकामिनीनां
कपोलकालागरुपत्त्रकाणि ॥ २० ॥

इतो मिथः पार्श्वविघट्टितेषु
जवाद् विमानेषु समापतत्सु ।
आसामितः प्रेङ्खितमध्यरत्न-
विसूत्रिता हारलताः स्फुटन्ति ॥ २१ ॥

एते गतिक्षोभवशात् वधूनाम्
पतयोन्मयूखा मणिकर्णपूराः ।
इतस्तले सञ्चरतामहीना
निपत्य चूडामणिषु स्वनन्ति ॥ २२ ॥

पातालमेतन्नयनोत्सवेन
विचिन्त्य शून्यं शशलाञ्छनेन ।
ईहाङ्कनाभिः स्वमुखच्छलेन
कृताम्बरे चन्द्रमयीव सृष्टिः ॥ २३ ॥

इतो रसं पल्लवयन्ति वीरं
विद्याधराणां करवालवल्लयः ।

---

१ Tr reads °गत्वराणां, I °भित्वराणां for °गामिनीनां, while Tr mutilates four letters at the end of this line २ I reads मित्र for मिथ ३ T reads °विभि for °मित्त°, while Tr °रत्नमध्या for °मध्यरत्न° ४ h reads स्फुरन्ति for स्फुटन्ति ५ Tr reads स्थले for तले ६ Tr reads स्वनन्ति for स्वनन्ति ७ T reads इभाङ्कनाभि for ईहाङ्कनाभि ८ h reads चान्द्रमसीव for चन्द्रमयीव ९ T reads करवालवल्लय and I करवालवल्लय both for करवालवल्लय

एताश्च शृङ्गारमितोऽङ्गनाना
दृशो नवेन्दीवरदामदीर्घा ॥ २४ ॥

झटित्यवाप्तप्रतिबिम्बमेतत्
सैन्य विलोक्य स्फटिकोऽङ्गणेषु ।
सविस्मय नागपुराङ्गनाभिर्
इत क्रियन्ते नयनोत्पलानि ॥ २५ ॥

नरेन्द्र तस्माद्गगनावगाहि-
त्वद्दर्शनव्यग्रतपस्विपङ्क्ते ।
दूर हविर्धूमसुगन्धिसीम्न
स्थानात् वय वङ्कुमुने प्रवृत्ता ॥ २६ ॥

वनवर्णनम् ।

यथाऽयमभ्येति पुरो नभस्वान्
आकृष्टनानाविधपुष्पगन्ध ।
अग्रे तथाऽभ्रलिहभूरुह न
शङ्के वन दृक्पथमेष्यतीति ॥ २७ ॥

एभिर्महीपाल विमानकल्पैर्
अग्रेसरैस्सम्भ्रममुक्तमार्गे ।
निष्कम्पकेतुर्मरुताऽस्यँदेन
• रथस्तवाय जियति प्रयाति ॥ २८ ॥

---

१ B reads °धाम° for °दाम° २ B and I read °णाङ्ग्णेषु and S and Tr °णाङ्गणेषु both for °काङ्गणेषु ३ I substitutes °णा for °ना° ४ B reads वङ्कुवङ्कुमुन for °वय वङ्कुमुने ; while T स्थानाद्वयं for स्थानात् वयं ५ B reads विस्मय but in the margin there is मन्दरागम् for it ६ Tr reads यथाऽस्तिमहीरुह for यथाऽभ्रलिहभूरुह ७ Tr reads स्यन्दन for ऽस्यँदेन

मितप्रसूनस्तबकैस्तरूणाम्
एषा पुरस्तारकितान्तरिक्षा ।
झटित्यशेषैव निमेषमात्राद्
उन्मीलिता पश्य वनान्तलेखा ॥ २९ ॥

यदीश विद्याधरवाहिनीयम्
आकाशतः किञ्चिदधः प्रवृत्ता ।
अवैमि चित्ते निहितं तदस्याः
पदं वनालोकनकौतुकेन ॥ ३० ॥

एषा तमालावलिनीलकान्तिर्
उपोढरामामुखहेमपद्मा ।
सेना वनस्याभिमुखं प्रयाति
पश्याम्बुराशेरिव जह्नुकन्या ॥ ३१ ॥

अस्याः क्षमापाल वनान्तराजिर्
विमानपङ्क्तिः पुरतः स्थितेयम् ।
आलम्बते रत्नकिरीटलक्ष्मीम्
मणिप्रभोदीर्णमहेन्द्रचापा ॥ ३२ ॥

एते प्रलीनक्षतशोणितोक्ताः
पश्येन्द्रगोपैश्रियमुद्वहन्तः ।

---

१ Tr reads अवाप्तम् for अशेषैव. २ Tr reads यदस्य for यदीश. ३ T. and Tr read इव for अध. ४ Tr. reads विहितं for निहितं and T. तदन्याः for तदस्याः, while I. च तस्याः for तदस्याः. ५ K. reads तमालस्तबक°, I. तमालावलि° and Tr तमालनील° all for तमालावलि°. ६ B reads °नाना° for °रामा°. ७ Except Tr all read महावनस्य for सेना वनस्य. ८ T. reads श्यामाम्बुराशे for पश्याम्बुराशे. ९ I reads °लक्ष्मी मणि° for °लक्ष्मीम् मणि°. १०. Tr. reads °शीर्ण° for °दीर्ण°. ११ T. reads °माहुरा for °मान्का. १२. T. and Tr. read °पोपै° for °गाप°, but the latter reads so in the margin.

तुरङ्गलालाजलबिन्दवस्ते
लुठन्ति हेमद्रुमपल्लवेषु ॥ २३ ॥

मन्दानिलान्दोलितपल्लवाग्रा
समग्रपुष्पाहरणोद्यताभ्य: ।
इतो लता: पार्थिव सरभन्ते
लावण्यमादातुमिवाङ्गनाभ्य: ॥ २४ ॥

अमूनि पुष्पाणि महीरुहाणाम्
आभान्ति लीनभ्रमरोदराणि ।
विद्याधरीविभ्रमदर्शनार्थम्
उत्तानितानीव विलोचनानि ॥ २५ ॥

पश्याग्रवातायनमेतदेत्य
लताग्रपुष्पाण्यवचिन्वतीनाम् ।
नृपातिभारेण नितम्बिनीना
विमानरत्नानि पुरो नमन्ति ॥ २६ ॥

शाखावलग्नासु महातरूणा
विटङ्करत्नद्युतिशृङ्खलासु ।
विलम्बमानैरिव चुम्बितेयम्
इतो विमानैर्मणिपञ्जरश्री ॥ २७ ॥

इमा सम प्राणसमैर्वनेऽस्मिन्
सर्वर्तुलक्ष्मीनिचितोपगूढे ।

---

१ Tr reads ललन्ति and in the margin लसन्ति both for लुठन्ति २ K and T read °ताग्र्य: for °ताभ्य ३ h reads सरभन्ते for संरभन्ते ४ h reads म्लान for लीन° ५ T reads उत्तानि तानीव for उत्तानितानीव ६ B reads °पुष्पाण्यविचिन्वतीनाम् h °पुष्पाणि विचिन्वतीनाम् and Tr °पुष्पाण्यवचिन्वतीनाम् all for °पुष्पाण्यवचिन्वतीनाम् ७ h reads विमान° for रत्नान° ८ K reads विलम्ब्यमानै for विलम्बमानै

नभःस्थिता एव नरेन्द्र पश्य
पुष्पोच्चये लोलदृशः प्रवृत्ताः ॥ ३८ ॥

एताः करैः काञ्चनपद्मगौरैर्
विलासवत्यः सनिबन्धनानि ।
हरन्ति पुष्पाणि महीरुहाणाम्
मृदूनि यूनामिव मानसानि ॥ ३९ ॥

आसां लताग्रस्तबकोत्थितानि
शिखण्डरत्नद्युतिचुम्बितानि ।
पद्मोपरिष्टादलिमण्डलानि
नीलातपत्रभ्रममारभन्ते ॥ ४० ॥

मुञ्चत्यलिः पुष्पलतामितो ऽयम्
आघ्रातरामामुखपद्मगन्धः ।
गुणप्रकर्षे हि सदा मनांसि
गुणान्तरज्ञानवतां रमन्ते ॥ ४१[5] ॥

लतेतया चूततरोः सलीलम्
आनीयमाना नतिमानताङ्ग्या ।
पद्मोत्पतत्पुष्पशिलीमुखेयम्[6]
आभाति कन्दर्पधनुर्लतेव ॥ ४२ ॥

भ्रमद्विरेफावलिलोलदृष्टिर्
लीलावतंसक्रिययोन्मुखानि ।

१. Tr. mutilates two letters at the beginning, but the copyist substitutes रप॰ for नभ॰, while T. reads ॰येव for एव. २ Tr. mutilates three letters after करै and reads ॰पद्मरागै for ॰पद्मगौरैर् ; while K. reads ॰पत्र॰ for ॰पद्म॰. ३. B. reads चूडाग्र॰ for शिखण्ड॰. ४ B. reads मुञ्चत्ययं for मुञ्चत्यलिः. ५. T. reads ॰मरन्ते for रमन्ते. ६ T. reads ॰मुखोऽयम् for ॰मुखेयम् ७ B. reads ॰क्रिययोन्मुकानि and I ॰क्रिययाद्युकानि both for ॰क्रिययोन्मुखानि; while Tr mutilates three letters before मुखानि.

विचेतुमेषा कुसुमानि नालं
तरोस्तनालिङ्गनदोहदस्य ॥ ४३ ॥

प्रियार्पितैः कान्तनिपीतमुक्त-
पुरन्ध्रिबिम्बाधरकान्तिचोरैः ।
अस्याः सरत्नैरपि कर्णपाशे
किमप्यशोकस्तबकश्चकास्ति ॥ ४४ ॥

अस्या लताक्षेपविसूत्रितस्य
हारस्य लग्नस्तनकुङ्कुमस्य ।
भ्रष्टाः क्षितौ दाडिमबीजमोहात्
आक्षिप्य मुक्ताः कपयः क्षिपन्ति ॥ ४५ ॥

निदाघलक्ष्मीहसितच्छटेयम्
पर्याप्तकृष्णागरुधूमगन्धे ।
बन्धे कचानां नवमल्लिकाऽस्याः
पदयालिनीलेः परिभागमेति ॥ ४६ ॥

असावितः पार्थिव दन्तपत्रम्
आपास्य हंसच्छदपाण्डु बाला ।
करोति कर्णे नवकर्णिकारम्
उत्तापिताष्टापदरत्नशोभि ॥ ४७ ॥

स्थितोऽयमन्तर्नवपल्लवानाम्
प्रवाललताग्राङ्गुलिरायताक्ष्याः ।

---

१. Tr reads कुसुमाकर for प्रियार्पित २. T and I read °गुम्फः for °मुक्त° ३. Tr reads °स्तबक and T °स्तबकम both for °च्छटेयम् ४. Tr. reads °कृष्णागरुपूर° and T. °कृष्णागरुपूर° both for °कृष्णागरुधूम°, while I reads °गन्धे for °गन्धे ५. B reads °नील° and T °नीले for °नीलेः, but the former in the margin °नीलैः; while T and Tr read गर° for परि° ६. T reads °उत्तापिता° for °उत्तापिता°.

व्यक्ति शरच्चन्द्रकरोज्ज्वलाभिर्
नेत्रांशुरेखाभिरिव प्रयाति ॥ ४८ ॥

धावत्करा कर्णशिरीषलोभात्
इतस्ततः सम्पतति द्विरेफे ।
क्रीडामिव व्याकुलदृष्टिपाता
बाल्यमभ्यस्यति कन्दुकस्ये ॥ ४९ ॥

प्रावृड्विलासस्मितमुद्वहन्ती
कर्णे नवं केतकबर्हमेषा ।
प्रियावतंसीकृतचन्द्रलेखा
चकास्ति कन्येव हिमाचलस्य ॥ ५० ॥

विलोकितालिस्य कपोलभागात्
प्रबद्धशावेऽधिगते विमानम् ।
इत कैदम्बादनिपत्तहस्ताम्
आस्ते भयादालिखितेव तन्वी ॥ ५१ ॥

पुष्पाणि चिन्वत्यनिशुक्तकस्य
पश्य श्लथ केशकलापमेषा ।
अंसे बिभर्ति तमालनीलं
विलासबालव्यजनं स्मरस्य ॥ ५२ ॥

बिभ्रत्यसौ पांसुनि पुष्पधूलिम्
तथा सखे नेत्रनि बद्धभाव ।

---

१ A reads [illegible] for [illegible] २ T reads [illegible] for [illegible] ३ B reads [illegible] for [illegible] ४ T reads [illegible] for [illegible] ५ B reads [illegible] and T [illegible] for [illegible] ६ A reads [illegible] for [illegible] ७ T reads [illegible] and T [illegible] ८ B reads [illegible] for [illegible] ९ A and T read [illegible] for [illegible] १० T and T read [illegible] for [illegible]

चित्रं झटित्यश्रुलवावकीर्णे
दृशौ सपत्न्याः कलुषीकरोति ॥ ९३ ॥

मध्यच्युते बिभ्रति किंशुकेऽस्मिन्
अलारुणस्याकृतिमङ्कुशस्य ।
अस्यास्तनाभ्यामधुना धृतेयम्
अनङ्गमत्तद्विपकुम्भलक्ष्मीः ॥ ९४ ॥

अभ्यागतायाः सहसाऽमुनाऽस्याः
कन्दर्पसाम्राज्यधुरोद्वहेन ।
सुगन्धिभिः पाटलिपादपेन
पुष्पैरितः कल्पितमातिथेयम् ॥ ९५ ॥

आर्द्रागसेयं गमिता प्रसादं
कृतप्रणामाञ्जलिना प्रियेण ।
प्रमृष्टबाष्पा सुमुखी नखाभ्यां
चूताङ्कुरं मानमिवोच्छिनत्ति ॥ ९६ ॥

अभ्यासते कामपि कान्तिमासाम्
एते सकुन्दाः कबरीकलापाः ।
कुमुद्वतीकान्तकरानुविद्धाम्
तमःप्रताना इव यामिनीनाम् ॥ ९७ ॥

पुष्पाणि नानाविधवर्णभाञ्जि
विमानवातायनतो विचित्य ।

---

१ Tr reads °मेहत्वस्य for °मङ्कुशस्य २ L reads ऽमुनाऽऽशा for ऽमुनाऽस्या ३ B reads °पुरवोरेण and K °पुरन्धरेण for °धुरोद्वहेन ४ B and Tr read पाटल° for पाटलि° ५ B reads धूमा for धूम°. ६ T and L read °बाष्पाम्बुमुखी for °बाष्पा सुमुखी ७ L reads अभ्यासम् for अभ्यासते ८ T reads सकुन्दाः for सकुन्दा ९ Tr. reads [illegible] and corrects [illegible] for [illegible]

युवायमिन्द्रायुधवर्णकान्तम्
उत्तंसमस्याः सुदृशः करोति ॥ ५८ ॥

पर्येयमुद्राहुलताऽर्हितश्रीर्
मध्येन नश्यत्त्रिवली लतेव ।
विमानतः कोमलमुच्चिनोति
वधूर्मधूकं स्वकपोलकान्ति ॥ ५९ ॥

अदः सुगन्धीकुरु मत्प्रसूनम्
मुखाब्जसौगन्ध्यकणार्पणेन ।
ईत्यन्वलामकलतां न याच्ञाम्
अस्याः करोतीव स कर्णिकारः ॥ ६० ॥

तथा न चूते नवमञ्जरीयम्
अवाप्तवत्यात्मगुणप्रकर्षम् ।
अस्याः सकालागरुपत्रलेखे
यथा कपोले कमलेक्षणायाः ॥ ६१ ॥

वहत्यशोकोऽयममर्त्यकान्ता-
पादाहतः कान्तिमलक्तकाङ्कम् ।
कृत्वा जगत्यस्खलितां निजाज्ञाम्
स्कन्धेऽर्पितं तूणमिव स्मरेण ॥ ६२ ॥

चिरेण मन्ये बकुलद्रुमोऽयम्
अवाप्तपारः स्पृहणीयतायाः ।

---

१. B and T. read इन्द्रायुध[illegible]कान्त॰ and Tr इन्द्रायुध[illegible] for इन्द्रायुधवर्णकान्तम् २ B and T. read [illegible] for [illegible] ३ Tr reads ॰[illegible]म् for ॰कान्ति ४. B reads [illegible] and in the margin ॰[illegible] for [illegible] and ॰[illegible] respectively. ५ Except h. all others read न for स ६ B reads [illegible] for चूते ७ Tr. reads [illegible] for कोन्तिम् ८. T. mutilates three letters after स्कन्धेऽर्पितं. ९. K reads ॰सार for ॰पार.

अर्थी करोऽस्याः सुमनस्सु येस्य
जातो जितामर्त्यतरुप्रवालः ॥ ६३ ॥

फलं शिरीषेण चिरादवाप्तम्
अस्यास्समग्रं सुकुमारतायाः ।
निरस्य गीर्वाणतरुप्रसूनं
यदेतदुत्तंसितमायताक्ष्या ॥ ६४ ॥

अस्याः श्रुतौ चम्पकमादधत्याः
करेण मुक्तावलयाङ्कितेन ।
एष द्विजः स्वस्त्ययनं विरावैर्
नास्याः करोतीति न मञ्जुकण्ठः ॥ ६५ ॥

विन्यस्तबन्धूकदली मुखेऽस्याः
स्वेदार्द्रकालागरुपत्रवल्ली ।
चकास्ति सन्ध्यातपश्लिष्टशशाङ्कि
कलङ्कलेखा शशलक्ष्मणीव ॥ ६६ ॥

एता मिथो रुद्धविमानमार्गौ
लताप्रजः पुष्पमनाम्रुवन्त्यः ।
भवन्ति भारानमिताङ्गकेषु
यद्वाभ्यसूयाः स्तनमण्डलेषु ॥ ६७ ॥

एतानि कान्तैः प्रमदाजनस्य
र्नवप्रवालान्यवतंसितानि ।

---

१ K and T read यस्या for यस्य २ T reads आयताक्ष्या for आयताक्ष्या ३ B reads यस्य for अस्या ४ I reads यस्या करोमीव T नाऽस्या करोमीव and Tr. नैवं करोतीव all for नाऽस्या करोतीति ५. B and I read °कीर्णो and Tr °लिप्त° both for °शङ्कि. ६ I reads° मार्गेलताप्रजा for °मार्गौ लताप्रज, while K लताप्रग for लताप्रज ७ T and Tr read °मनाम्रवन्त्य for °मनाम्रुवन्त्य ८ T. reads नव° for नव°

पश्यन्ति पश्य स्वमिवात्तकान्तिं
कपोलपालीमणिदर्पणेषु ॥ ६८ ॥

यद्यद्वने ऽभूत् कुसुमं सुगन्धि
वधूजनैस्तच्चदितो गृहीतम्।
कृत्स्नात्रिलोकीविजयावतंसं
निर्मातुमिच्छासमिव स्मरस्य ॥ ६९ ॥

कर्णावतंसीकृतपल्लवानां
विचित्रपुष्पाभरणोज्ज्वलेषु।
पश्याभितः पल्लवितेयमासाम्
अङ्गेषु सारङ्गदृशामृतुश्रीः ॥ ७० ॥

स्वेदोदबिन्दुच्छलतः कपोले
वितीर्णमुक्तार्घ इव स्मरस्य।
एणीदृशां कान्त इव प्रवृत्तः
श्रमोऽयमालिङ्गितुमङ्गलेखाम् ॥ ७१ ॥

आसां पृथुस्वेदकणाङ्कितानि
वक्त्राणि नेत्रोत्सवमर्पयन्ति।
प्रत्युप्तमुक्ताफलदन्तुराणि
हिरण्मयानीव सरोरुहाणि ॥ ७२ ॥

एतानि पश्य च्युतपुष्पधूलि-
व्यालुप्तपक्ष्मावलिसौष्टवानि।

१ B. reads °कीर्ति कपोल°, T. and I. °कान्ति कपोल° for °कान्ति कपोल°; while I. substitutes स्व° for स्व°. २. T. I. and Tr. read °वनं for °निर्मा. ३. T. reads कृत्स्न for कृत्स्न°. ४. T. reads °स्मर्णं for °भर्णं. ५. Tr. reads कपोलसीवर्णे° for कपोले वितीर्ण° and स्वेदार्द्र° for स्वेदोद°. ६. Tr. reads प्रवृत्तश्रमोऽयमालिङ्गितुमङ्गकानि for प्रवृत्तः श्रमोऽयमालिङ्गितुमङ्गलेखाम्. ७. T. reads प्रत्याप्त° for प्रत्युप्त°. ८. Tr. reads पश्याच्युतपुष्पमाल्यान्यच्युतपक्ष्मावलि° for पश्य च्युतपुष्पधूलिव्यालुप्तपक्ष्मावलि° and B. पुष्प° for पश्य. ९. I. reads °पक्ष्म° for °पक्ष्म°.

वनं विहायाथ समग्रमग्रे
चचाल विद्याधरराजसैन्यम् ॥ ७८ ॥

गङ्गावर्णनम् ।

अथ प्रवालाधरबिम्बचुम्बि-
परिस्फुरत्फेनविलासहासा ।
वाचालहंसावलिकाञ्चिदाम-
सनाथतीरोरुनितम्बबिम्बा ॥ ७९ ॥

समीरवेल्लत्तटहेमवल्लि-
लोलप्रभापिञ्जरितोर्मिलेखा ।
विलासमज्जत्फणिराजकन्या-
सङ्क्रान्तकान्तस्तनकुङ्कुमेव ॥ ८० ॥

निमग्नदिङ्नागकपोलभित्ति-
सन्ताननिर्यन्मदवेणिकृष्णा
तृतीयनेत्रानलधूमवल्लि-
कलङ्कितेव त्रिपुरान्तकस्य ॥ ८१ ॥

भारानमद्भोगिफणास्थितायाः
स्थलोच्छलद्वीचिचयच्छलेन ।
उत्तम्भयन्तीव तले सतर्कम्
अर्कोपलस्तम्भशतानि भूमेः ॥ ८२ ॥

---

१ T reads °भासा for °हासा २ Tr reads °काञ्चि for °काञ्चि. ३ T. reads °रेखा for °लेखा ४. I reads निमग्नमङ्गाङ्ग° for निमग्नदिङ्नाग° ५ K. reads °कृष्ण for °कृष्णा ६ Tr reads स्मरवैरिणोऽस्य for त्रिपुरान्तकस्य ७ B reads °फण° for °फणा°, while T. has °भारानमद्भा° ... स्थितायाः for भारानमद्भोगिफणास्थितायाः ८ Tr reads °लोच्छलद्वीचिचयच्छलेन for °लोच्छलद्वीचिचयच्छलेन. T. also the same, but differs स्थल° for स्थला° ९ B reads उत्तम्भयन्ती सतले सतर्कम् and T. ... both for उत्तम्भयन्तीव तले सतर्कं, while Tr mutilates three letters after स...

तटोद्गतप्रांशु तमालराजि-
छायाघनश्यामलितार्धभागा ।
मूर्तिस्तुषाराचलतुल्यकान्तिर्
उमापति-श्रीधरयोरिवैका ॥ ८३ ॥

कादम्बचञ्चूद्धृतचक्रवाकी-
पारिप्लवव्यक्तमृणालकाण्डा ।
चण्डीधवोत्सङ्गजटाविटङ्क-
कुष्टेन्दुलेखाङ्कुरदन्तुरेव ॥ ८४॥

तरङ्गभङ्गोज्ज्वलचामरश्रीर्
उद्दण्डहेमाम्बुरुहातपत्रा ।
पुण्या पुरो दूरत एव तेन
त्रिमार्गगाऽदृश्यत पार्थिवेन ॥ ८५ ॥

कुलकम् ।

तस्यास्तटेऽथ कुसुमावचयश्रमार्त-
सीमन्तिनीनिवहसस्मितवीक्षिताया ।
विद्याधरेण विदधे धवलोर्मिधौत-
पर्यन्तहेमसिकते पृतनानिवेशौ ॥ ८६ ॥

---

१ B T and Tr read तुषाराञ्जन° for तुषाराचल° २ B and I read °वारि° for °वाकी° ३ Tr mutilates this line —
पारिप्लवव्यस्तमृणालिकाण्डा ।
४ T reads °कपोत° for °मृणाल° ५ T reads चण्डीश्वरोत्सङ्ग° and Tr चण्डीशसङ्ग° both for चण्डीधवोत्सङ्ग° ६ T reads °रेखा° for °लेखा° while B reads °लेखाङ्करदन्तुरेव for °लेखाङ्कुरदन्तुरेव ७ Tr does not insert this ८ B reads °कुसुमावचयेन श्रमार्त° and T and Tr कुसुमापचयश्रमार्ते° for कुसुमावचयश्रमार्ते° ९ B reads °सस्मितमीक्षितायाः for °सस्मितवीक्षिताया
१० B reads निवेश and in the margin निवेशः for निवेशौ

तदनु पुलिने सद्यो विद्याधरैः परिकल्पितं
नृपतिरविशल्लीलागारं स साहसलाञ्छनः ।
भ्रममजनयन्नेत्रोत्कीर्णा इति प्रतिबिम्बिताः
[1]सितमणिमये यस्मिन्नन्तर्बहिश्च मृगीदृशः ॥ ८७ ॥

[2]इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालावलोकनो नाम चतुर्दशः सर्गः ॥ १४ ॥



१. B. reads हित॰ for सित॰. २ I. and Tr. read परिमलस्य नवसाहसाङ्कचरिते, while I. पातालगङ्गावगाहनश्चतुर्दशः सर्गः and T. परिमलकालिदासकृतौ नवसाहसाङ्कचरिते महाकाव्ये and B. only चतुर्दशः सर्गः.

# अथ पञ्चदशः सर्गः ।

जलक्रीडावर्णनम् ।

अथ सान्द्रघर्मजलबिन्दु-
लुलिततिलकः प्रचक्रमे ।
हैमकमलसुभगे सरितः
सलिले निमङ्क्तुमसितेक्षणाजनः ॥ १ ॥

श्रममेत्य मुञ्चत मदम्बु-
रैभसपरिरम्भलीलया ।
एवमवददिव दीर्घदृशः
कलहंसयूथनिनदेन जाह्नवी ॥ २ ॥

मरुतावधूतकलधौत-
कमलमकरन्दगन्धिना ।
ऊर्मिदलनशिशिरेण बलात्
अबलाजनस्य नुनुदे परिश्रमः ॥ ३ ॥

परिषिद्धरेखमधितीर-
विरचितपदे वधूजने ।
कान्तिमुदवहदमर्त्यसरित्
तटरूढकाञ्चनलतेव काञ्चन ॥ ४ ॥

१. I. reads श्रममेत मुञ्चत, Tr श्रममङ्ग मुञ्चत and T. श्रमतो मदमुञ्चत all for श्रममेत्य मुञ्चत २ T. reads °रहस° for °रभस°. ३ T. reads °विकसेन for °निनदेन ४ T. reads °बन्धुना for °गन्धिना ५ T. reads परिश्रमम् for परिश्रम

सितचक्षुषामसितरत्न-
रुचिमुषि मृणालिनीदले ।
स्थूलजललवनिभेन दधे
नवमौक्तिकार्घ इव जह्नुकन्यया ॥ ५ ॥

उदितत्रपा इव विलास-
मसृणगमनेन सुभ्रुवाम् ।
जग्मुरमरसरितः पुलिनं
सहसा विहाय कलहंसपङ्क्तयः ॥ ६ ॥

धवलाभ्रकच्छुरितभित्ति-
लिखितललिताङ्गनालिपिम् ।
अप्सु कुवलयदृशां प्रतिमाः
सितरत्नदर्पणनिभासु लेभिरे ॥ ७ ॥

अथ वल्लभार्पितकराग्र-
निहितनिजपाणिपल्लवाः ।
वारिविकचकनकाब्जरजः-
कपिशोर्मिमालमबला जगाहिरे ॥ ८ ॥

सुदृशां निमज्ज्य सुरसिन्धु-
पयसि नियमस्थितैरिव ।
ऊर्मितरलितमयूखशिखैर्
मणिनूपुरैस्सपदि मौनमाददे ॥ ९ ॥

कुचलुठत्पयस्तयाऽथ
विगलितविमुक्तहारया ।

१. T. reads °चर्चित° for °च्छुरित°. २. Tr reads 'प्रियम्' for °नि-जम् ३. Tr. reads कपिलोर्मि° for कपिशोर्मि°. ४. T. reads 'स्थित' for °सुम°. ५ Tr. reads धवलित° for विगलित°.

प्रापि रतिरमणविलासतुला
ललितभ्रुवां जलविहारलीलया ॥ १० ॥

नवकुङ्कुमारुणपुरन्धि-
कुचकलशताडितं पयः।
रागमभजत न कस्य भवेत्
सुलभाङ्गखेलदबलस्य[1] विक्रिया ॥ ११ ॥

विकिरन् विहस्य मणिशृङ्ग-
धृतमुदकमेत्य पृष्ठतः।
साचिमुकुलितदृशा ददृशे
दयितो मुहुर्वलितकण्ठमेकया ॥ १२ ॥

परिणाहवत्कुचनिविड्ड-
करणवेल्लनोत्कदोर्लतम्।
लोलमुखरमणिकङ्कणया
विभिदे जले मुरजवाद्यमन्यया ॥ १३ ॥

हरिणीदृशो हृतपुरन्धि-
कुचकलशकुङ्कुमाङ्किता।
क्षिप्रमधिजघनमूर्मिलता
शिथिलेव हेमरशना विदिद्युते ॥ १४ ॥

सलिलं किरन्तमवलोक्य
रमणमपराङ्गनामुखे।

---

१ Tr. reads °वेल्लदबलस्य for °खेलदबलस्य. २. B reads प्रापि for प्रापि. ३ T. reads °वल्लनोत्क° for °वल्लनोत्क°, while Tr. mutilates one letter after वल्लनो. ४ B and T read एकया, but B in the margin अन्यया. ५ T. reads °कुङ्कुमारुणा for °कुङ्कुमाङ्किता.

चित्रमविरलधृताश्रुलवे
निमिमील काचिदबला विलोचने ॥ १५ ॥

द्रुतमत्रुटत् विबुधसिन्धु-
निबिडलहरीकराहतम् ।
हारवलयमरविन्ददृशाम्
कुशलं कुतोऽस्ति गुणिना जडान्तरे ॥ १६ ॥

शुशुभे कयापि करयन्त्र-
निहितशुचिवारिधारया ।
मुक्तसितकुसुमसायकया
मकराङ्कचापलतयेव बालया ॥ १७ ॥

परिवेपविभ्रमनिवेशि-
मनसिजतुषारदीधितेः ।
कोऽपि करकिसलये कम्पिता
विदधे मृणालवलयं मृगीदृशा ॥ १८ ॥

हृदयेशमुक्तजलधौत-
मलयजविलेपनोऽह्रिया ।
लक्ष्यनवनखपदावपरा
नलिनीदलेन पिदधे पयोधरौ ॥ १९ ॥

---

१ Tr reads भिन्न° for चित्र° २ Tr reads श्रुन्ति द्रुतं for द्रुतमत्रुटत् ३ Tr reads नियतं कुतोऽस्ति गुणिता जडान्वय for कुशलं कुतोऽस्ति गुणिना जडान्तरे T follows this reading, but omits first three letters, while I. reads जडान्वये for जडान्तरे ४ T reads कलापि for कयापि ५ T substitutes °चापलतया for °चापलतयेव बालया omitting four letters ६ Tr reads ऽप्य सया for कम्पिता ७ Tr reads °दृशाः for °दृशा ८ H does not insert the following —

लक्ष्यनवनखपदावपरा
नलिनीदलेन पिदधे पयोधरौ ॥ १९ ॥
अभिनोऽङ्गनामुखमृगाङ्कम्
उडुनिकरकान्तिमाददे ।

९ T reads विदधे परौ for पिदधे पयोधरौ

अभितोऽङ्गनामुखमृगाङ्कम्
उडुनिकरकान्तिमाददे ।
केलितरलतरुणीनिबिड-
स्तनताडिते पयसि बुद्बुदोत्करः ॥ २० ॥

विदधे वधूर्निजकराग्र-
गलितमणिकङ्कणाङ्किते ।
मेघशकल इव सैन्द्रधनुर्
वलयोदरे नयनमब्जिनीदले ॥ २१ ॥

असिताञ्जनाङ्कमभिजात-
कुवलयदृशां दृशोन्तरात् ।
नीरमहृत नहि शुद्धिमतां
तटवृत्तिराश्रितकलङ्कमार्जने ॥ २२ ॥

तरलोर्मिलङ्घितनितम्ब-
फलकलुलिताच्छवाससः ।
फेनपटलमसिताब्जदृशः
क्षणमेकमंशुकविलासमाददे ॥ २३ ॥

सुदृशः स्फुटं नवनखाङ्कम्
उरसि जलधौतकुङ्कुमे ।
कान्तिनिहितनयनं विदधे
पृथुहारतारतरलांशुपल्लवः ॥ २४ ॥

---

१ Tr reads °मादधे for °माददे २ Tr reads निदधे for विदधे ३ B reads मलिनम् for नयनम् ४ B reads नीरम but in the margin नीरम्, while Tr mutilates six letters after नीरमहृत in this line ५ Tr mutilates first four letters in this line ६ B reads सरल° for तरलो° ७ Tr reads °लुलितार्द्र° for °लुलिताच्छ°. ८ Tr reads °वलय° for °पटल° ९ The manuscript Tr ends with the क in this line, the remaining portion up to the end being lost

ललिताञ्जनस्य नयनस्य
सहभुवमिवेक्षितुं श्रियम् ।
लग्नजलसरलितैरलकैर्
लुलुटे ललाटतटसीम्नि सुभ्रुवः ॥ २५ ॥

दधतीव कापि रुचिमाप
मनसिजविलासवल्लकीम् ।
अंसविनिहितमृणाललता-
तलवर्त्यलाबुपरिवर्तुलस्तनी ॥ २६ ॥

सलिलाहतित्रुटितहार-
परिगलितमौक्तिकभ्रमात् ।
मुग्धयुवतिरपरा निदधे
दृगमब्जिनीदलपुटोदबिन्दुषु ॥ २७ ॥

धवलोदरैर्भयवशेन
तरलवलितैर्विलोचनैः ।
नीलनलिनदलदामदृशां
शफरैस्समं सुचिरमप्सु बभ्रमे ॥ २८ ॥

गलिताद्रदा गुरुतरङ्ग-
दलितमणिकर्णपूरकाः ।
स्रस्तकनकवलयाः सुदृशः
श्लथबन्धरत्नरशनाश्चकाशिरे ॥ २९ ॥

---

१ T. reads °सुरलितैर्ललिने for °सरलितैरलकैर् लुलुटे २ B reads °भ्रमा and K °क्रमात् both for °भ्रमात् ३ I reads पिदधे for निदधे, the letter पि is not clear ४ B reads वशभयेन for भयवशेन ५ B omits °दल° and substitutes °धाम° for °दाम°. ६ B and T read °लम्ब° for °बन्ध°

अतिक्रम्यमूर्मिकुटिलभ्रु[1]
बहलनवकुङ्कुमारुणम् ।
स्त्रैणकरतलनिरस्तमभूत्
उपजातकोपमिव जाह्नवीजलम् ॥ २० ॥

अकरोत् पदं पृथुनितम्ब-
विलुलितजलार्द्रवेणिषु ।
नीरलवशबलगण्डतला-
स्वबलासु कुण्डलित[2]कार्मुकः स्मरः ॥ २१ ॥

च्युतरत्नभूषणमरीचि-
रचितसुरचापमण्डलम् ।
केशकुसुमशबलं शुशुभे
सुदृशामनङ्गमददीपनं पयः ॥ २२ ॥

अथ ताभिरेकतपनीय-
सरसिजसनाथपाणिभिः ।
श्रीभिरिव समुदतारि[3] ततः
पुनरुक्तचाटुपटुभिः प्रियैस्सह ॥ २२ ॥

सजलांशुकान्तिविशदाङ्ग-[4]
जनितनिबिडत्रपाकुलाः ।
व्यक्तनवनखपदाभरणाः
प्रियलोचनान्यरमयन् मृगीदृशः ॥ ३४ ॥

---

१ T. reads अभिगम्यमूर्मिकुटिल° for अतिक्रम्यमूर्मिकुटिलभ्रु while B adds वो after भ्रु. २ B reads °मुकुलित° for °कुण्डलित° and T °स्वकुण्डलित° for °सुकुण्डलित°. ३ B reads समुदितारि, but in the margin समुदतारि, while I समुद्धमारि (वि?) for the same. ४ B reads सजलांशुशान्तिविषदाङ्ग° and I सजलांशुकान्तिविषदाङ्ग° for सजलांशुकान्तिविशदाङ्ग°.

अथ ता गृहीतशारदिन्दु-
धवलसिचयाः प्रसाधनाम् ।
चक्रुरधिवपुरमर्त्यसरित्-
पुलिनस्थलीकनकवल्लिधामसु ॥ २५ ॥

तिलकाङ्किताः प्रचुरपुष्प-
परिमलमुचो मृगीदृशः ।
ऊढनवललितपत्रलता
दधुरङ्गजोपवनराजिविभ्रमम् ॥ २६ ॥

न चिरादलङ्कृतिविशेष-
विहितरुचयो ऽतिपेशलाः ।
लक्ष्यनवनवरसाः शुचयः
कविपुङ्गवोक्तय इवाङ्गना बभुः ॥ २७ ॥

वहति स्म निर्मलकपोल-
लिखितमृगनाभिपत्रकम् ।
कापि निभृतमधुपावलिमत्
कलधौतकोकनदकान्तमाननम् ॥ २८ ॥

अधिकर्णमुद्गतमयूख-
मरकतमनोहरोदरम् ।
बालमिव मदनकल्पतरोर्
दलमेकया कनकपत्र[६]माददे ॥ २९ ॥

---

१ T. reads °निचया and B °सिचय for °सिचया ; while T. substitutes प्रसाधना for प्रसाधनाम्. २ T. reads °कनकस्थलीपुलिनवल्लि° for °पुलिनस्थलीकनकवल्लि° ३. T. reads तिलकाङ्किता for तिलकाङ्किता ४ T. reads रूढ° for ऊढ°. ५ T. reads कपि° for कवि°. ६ I reads आदधे for आददे

धृतयावकाङ्कमपि कान्त-
वदनपरिचुम्बनोचिते ।
रागमधररुचके निदधे
दयिते च काचन चकोरलोचना ॥ ४० ॥

हरिणाङ्कसुन्दरमनेक-
विशदगुणगुम्फिताकृतिम् ।
हारमवहदपरा न परं
हृदि कान्तमप्यसमबाणदीपनम् ॥ ४१ ॥

इतरा पदाङ्कमिव मत्त-
मदनकरिणोलिकोदरे ।
सान्द्रमृगमदमयीरचित
तिलकं कुरङ्गतिलकानना दधे ॥ ४२ ॥

हृतसुमहेमशतपत्र-
रुचिमुकुलिताङ्गुलीदले ।
काचिदितरकरसंहटित
निदधे विलासमणिकङ्कण करे ॥ ४३ ॥

उदितासु काञ्चिगुणमध्य-
मरकतमरीचिमुचिषु ।
व्यक्तिमलभत न रोमलता
स्मरदीपकज्जलशिखा मृगीदृशाम् ॥ ४४ ॥

---

१. B reads °चतुर्थि for °रागमधर २. T reads परा for परं ३. I omits °सुम° while T substitutes °चारु° for °सुम° ४. I reads °संस्फुटित for °सङ्घटित ५. h reads °दृशः for °दृशाम्

सरसागसेव रमणेन
चरणनलिनानुपेङ्घ्रिणा ।
पुष्पशरतरलिता दधिरे
मणिनूपुरेण मृगलोचना रुचिम् ॥ ४५ ॥

दधतीभिरिन्दुकरजाल-
शबलतिमिरोर्मिविभ्रमम् ।
ऊढधवलकुसुमाभिरल
कबरीलताभिरबलाश्वकाशिरे ॥ ४६ ॥

प्रियपाणिपङ्कजधृतेषु
सकलशशिबिम्बबन्धुषु ।
वक्त्रकमलमविलोलदृशो
मणिदर्पणेषु ददृशु पुरन्ध्रय ॥ ४७ ॥

प्रकट दधज्झटिति रागम्
अल्पमथ वारुणीम्प्रति ।
कान्तिनिकर इव तिग्मरुचेर्
वनिताजनोऽभिमुखता समाददे ॥ ४८ ॥

उदियाय मानतिमिरौघ-
विघटनपटुर्मनोम्बरे ।
बालकुवलयदृशा विशदे
शनकैर्मनोभवकुरङ्गलाञ्छन ॥ ४९ ॥

अरुणाङ्गुलीदलनिरुद्ध-
नवकनककोशकर्णिके ।

---

१ B reads °पङ्घ्रिना for °पङ्घ्रिणा २ T reads °दधिरमणि for दधिरे मणि° ३ T reads रूढ° for ऊढ° ४ B reads समादधे for समाददे

सान्द्रमधुपरिमलैरुरुचे
करपङ्कजैरथ चकोरचक्षुषाम् ॥ ५० ॥

मणिशुक्तिषु क्षणमुपोढ-
कुवलयसुगन्धिसीधुषु ।
न्यस्यदसमशरयन्त्रमिव
भ्रमतिस्म भृङ्गकुलमुत्सुकोत्सुकम् ॥ ५१ ॥

ररुचे ऽलिमण्डलमुदंशु-
कनकचषकोपरि स्थितम् ।
एकमिव रतिपतेरुदितं
तपनीयदण्डमसितोष्णवारणम् ॥ ५२ ॥

विधृता करे प्रियतमेन
कतिपयशिलीमुखान्विता ।
चित्तमकृत विवशं सुदृशां
कुसुमेषुकार्मुकलतेव वारुणी ॥ ५३ ॥

अतिरागिणि प्रणयिनीव
मधुनि परिचुम्बितानने ।
व्यक्तिमलभत मदो हृदये
पुलकः कपोलफलके च सुभ्रुवाम् ॥ ५४ ॥

प्रतिमागतेन्दुकरजाल-
धवलितमिव श्रियं दधे ।

---

१. B reads सार्द्र° for सान्द्र°. २ K. reads °सुगन्ध° for °सुगन्धि°; while I. substitutes °सिन्धुषु for °सीधुषु ३. B. reads °मन्त्र° for °यन्त्र°; while I. substitutes भ for म ४ T. reads रुचिरे for ररुचे. ५ B. reads °न्वितान for °न्विता. ६ K. reads स्थितम् for स्थितम ७ B and I read पुलकाः for पुलक. ८. T. reads दधते for दधे.

पानानमितमुखमुग्धवधू-
विगलद्विलासहसितच्छटं मधु ॥ ५५ ॥

मधु कापि पाटलकपोल-
तरलकलधौतकुण्डला।
लोलनिजमुखतुषारकर-
प्रतिबिम्बगर्भमभिकार्पितं पपौ ॥ ५६ ॥

अतिरक्तमायततरेण
विलसदसितोत्पलश्रिया।
काममपिबदपरेन्दुमुखी
चषकेण सीधु, नयनेन वल्लभम् ॥ ५७ ॥

अगमत् त्रयस्य सममेव
परिमलरसज्ञतामलिः।
कल्पविटपिमधुनः प्रमदा-
मुखमारुतस्य विकचोत्पलस्य च ॥ ५८ ॥

अधराग्रचुम्बनमवाप्य
कमलदलदीर्घचक्षुषाम्।
श्वासतरलमजनिष्ट मुदा
मुहुरात्तलास्यमिव कापिशायनम् ॥ ५९ ॥

---

१ B reads पारि° for पान°, while I. reads परि° for the same. २ T. reads °भसित° for °हसित°. ३ B and K. do not insert the following—

मधु कापि पाटलकपोल
तरलकलधौतकुण्डला।
लोलनिजमुखतुषारकर-
प्रतिबिम्बगर्भमभिकार्पित पपौ ॥ ५६ ॥

४ T. reads °मधिकापि for °मभिकार्पि°. ५ This stanza is given in the margin in I. ६ T. and I read अली for अलि. ७ T. does not insert च ८. T. has - - - सतरल°, but there is the want of only one letter. ९. I reads °शा° for °शा°, while T. °शायिनम् for °शायनम्.

मदमांसलेन रमणेन
नखपदमिवार्पितं हृदि ।
नातिविशदपदबन्धमथो
नवसाहसाङ्कचरितं जगुः स्त्रियः ॥ ६० ॥

मदिरार्पिताधरदलेन
युवतिरमृतच्छटोपमा ।
प्रेमरसमुदपु दीर्घदृशा
हृदयेषु पल्लवयतिस्म मन्मथम् ॥ ६१ ॥

दयिताहिते युवजनेन
विलसदलिपाटलद्युतौ ।
कामसुहृदि विहितः प्रणयः
प्रथमं मधुन्यधरपल्लवे ततः ॥ ६२ ॥

अवधूतमानमधुपान-
रसरभसतः प्रसन्नताम् ।
प्रापुरतिपृथुदृशा सहसा
हृदयानि चाऽऽच्छमणिभाजनानि च ॥ ६३ ॥

दयितामनङ्गमदमूर्तिम्
अमिलनलिनावतंसकाम् ।

---

१ B and h read सम° for मद° २ B and T read युवति° for युवतिर्° while T °च्छदा° for °च्छटा° ३ B reads दयितांहित h दयिताहि ते and T दयितायुत all for दयिताहिते ४ h reads पुनः for सम ५ h reads °लता for °दृशा and T °दृशा for the same ६ B does not insert the following stanza:—

दयितामनङ्गमदमूर्तिम्
अलिनमल्लिनावतंसकाम् ।
[illegible]
[illegible] ॥ ६४ ॥

सान्द्ररुचियुवजनो मदिराम्
परिचुम्बतिस्म न पेर वधुमपि ॥ ६४ ॥

अनयन् सहैव शिथिलत्वम्
उभयमुभयेन योषिताम्।
व्रीडमरुणरुचिना मधुना
मणिकाञ्चिदाम च करेण कामिनः॥ ६५ ॥

सुदृशां मदादथ परिस्रुद्
अरुणितसितोदरा कराद्।
पेतुरमरसरितः पुलिने
मणिशुक्तयः प्रियतमे च दृष्टय. ॥ ६६ ॥

नवपल्लवारुणसुवाह
धूनतरुणवारुणीमदः।
रागमर्थ शुचिनि गण्डतले
नयनोदरे च मदिरेक्षणाजनः ॥ ६७ ॥

अपरिस्फुटोक्तिललितासु
मदमुकुलदीर्घदृष्टिषु।
तासु शबलकुसुमांसलसत्-
कबरीलतासु पदमादधे स्मरः ॥ ६८ ॥

आपानभूरवसितासवरागदीर्घ-
सेन्दीवरस्फटिकशुक्तिगता चकासे।

---

१. T reads वर for पर २ B reads अनयत् सहसैव for अनयन् सहैव, while T substitutes अनयन् for अनयन् ३ I reads °दरा दराल, T °दरा कराल and K °दरा करान् all for दरा कराद् ४ K reads °मुक्तय for °शुक्तय ५ T reads °मुचा for °सुवाह ६. K and T read °रति° for °मथ ७ T reads °स्फुटोक्त° for °स्फुटोक्ति° ८ B and K read आदद for आदधे ९ T reads °नवरागदिव्य° for °रावरागदीर्घ° १० B in the margin, and T reads चकाश for चकासे

कौतूहलान्मदविलोलवधूविलास-
व्यालोकनोन्मिषितवक्लपरम्परेव ॥ ६९ ॥

अविरलमणिदीपोद्द्योतदूरापसर्पत्-
तिमिरममरसिन्धोः कूलकच्छं प्रविश्य ।
अथ सममसुनाथैस्ताः सलीलं निषेदुस्
सरसकनकजम्बूपल्लवप्रस्तरेषु ॥ ७० ॥

सान्द्रोन्मीलत्सौरभाण्युद्वहन्त्यो
विद्युल्लेखापिङ्गलान्यङ्गकानि ।
लक्ष्मीं हेमाम्भोजमाला इवापुः
सारङ्गाक्ष्यः प्रेयसां कण्ठलग्नाः ॥ ७१ ॥

ततो विसूत्रच्युतहारयष्टिः
शीर्णाङ्गदो भङ्गुरकर्णपूरः ।
मदेन सद्यो मदिरेक्षणानां
रतोत्सवः पल्लवितो बभूव ॥ ७२ ॥

नानाङ्गरागशबले श्लथबन्धलोल-
धम्मिल्लमाल्यकुसुमप्रकरावकीर्णे ।
पुष्पेषुतल्प इव वक्षसि वल्लभानां
निद्रामवापुरथ ताः सुरतश्रमेण ॥ ७३ ॥

कन्दर्पस्य त्रिलोकीहठविजयमहासाहसोत्साहहेतुर्
धुन्वंस्तत्पक्ष्मधूलिव्यतिकरकपिशाः काञ्चनाम्भोरुहाणि ।

१. B reads °नेत्र° and K °चक्षु° for °वक्त्र° २ T. and I. read °दीप° for °दीपो°. ३ B reads प्रवेश्य for प्रविश्य. ४ T. reads °पिङ्गकानि for °पिङ्गलानि ५ B and K. read °मिवापु for इवापु. ६. B reads मध्येन for मदन ७ T. reads पक्ष्मभाना for वल्लभाना. ८. B reads °विजयमह°, T. °हरविजय° and K °नरविजय° for °हठविजय°. ९ T. reads °हेतुम् for °हेतुर. १० B. reads °धूलि° for °धूलि°.

तन्वानस्तीररूढत्रिदशतरुलतालास्यमालस्यभाजां
तासां सम्भोगकेलिक्लमभरमहरज्जाह्नवीवीचिवातः ॥७४॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालगङ्गावगाहनो नाम पञ्चदशः सर्गः ॥ १८ ॥

---

१. T. reads °कूट° for °रूढ°. २. I. reads °भाज for °भाजां. ३ K. reads °कच्छ° for °वीचि°. ४. I. has परिमलस्य नवसाहसाङ्कचरिते पातालगङ्गावगाहन and T. श्रीपरिमलकालिदासकृतौ साहसाङ्कचरिते for श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्न पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये पातालगङ्गावगाहनो नाम.

## अथ षोडशः सर्गः ।

पाटलागमनम् ।

अत्रान्तरे नभस्सिन्धुपुलिनं प्राप पाटला ।
दधत्यनङ्गलेखेन लाञ्छितं पाणिपल्लवम् ॥ १ ॥

मणिप्रग्रीवकोद्गीर्णशुनासीरशरासनम् ।
अपश्यद्रगमोद्धिखि तत्र स्फटिकवेश्म सा ॥ २ ॥

तदिन्द्रनीलद्वारे सा हेमवेत्राकुले बभौ ।
श्लिष्यन्ती सतडिल्लेखे लेखेवेन्दोः पयोमुचि ॥ ३ ॥

रत्नवातायनस्थस्य तिष्ठन् पार्श्वे महीपतेः ।
द्वाःस्थं किमपि पृच्छन्ती तामैक्षत रमाङ्गदः ॥ ४ ॥

अन्तः प्रवेशयामास स च तामात्तसम्भ्रमः ।
ययौ सा च विश्राम्यत्युर्लोचनामृतवर्तिताम् ॥ ५ ॥

सिताश्महर्म्यमुत्तुङ्गं झटित्यधिरुरोह सा ।
आनन्दकन्दलीचित्तमत्यच्छं पार्थिवस्य च ॥ ६ ॥

क्षितिचुम्बितहारं सा प्रणनाम महीभुजे ।
रमाङ्गदं करग्राहसौहार्दैं पात्रतां नयत् ॥ ७ ॥

---

१. B reads करपल्लवम् for पाणिपल्लवम् २ T reads स्फाटिक° for स्फटिक°. ३. T. reads °कुला for °कुले; while B reads हेमवेदा° and in the margin हेमवेधा° for हेमवेश्म°. ४. T reads श्लिष्यति for श्लिष्यन्ती. ५ B. reads तिष्ठतोऽस्य for तिष्ठन् पार्श्वे ६. K. reads तां सुकपीठक· for तामात्तसम्भ्रम ७ K. reads अत्यर्थं for अत्यच्छं. ८. I. and T. read °चुम्बित° for °चुम्बित°. ९. We follow here the reading of K, for करग्राहसौहार्दं पात्रतां नयत्, while B. and I. read च निर्व्याजसौहृदा परिषस्वजे and T च निर्व्याज सौहार्दात्परिषस्वजे.

नृपेण स्वयमुक्ता[1]पि इत एह्येहि पाटले ।
तल्लीला[2]मणिपर्यङ्कसविधे निषसाद सा ॥ ८ ॥

पाटलावाक्यम् ।

कृतसम्भाषणा साथ तेनावनिमनोभुवा ।
इत्यवोचत दन्तांशुश[3]बलाधरपल्लवा ॥ ९ ॥
मुद्रितस्मरसौन्दर्यकान्ता[4] नेत्रामृतच्छटा ।
इयं मूर्तिर्महाराज कच्चित्[5] कुशलिनी तव? ॥ १० ॥
कथमेतां प्रविष्टस्त्वं भूमिमत्यन्तदुर्गमाम् ।
न कस्य विस्मयायैव शक्तिरत्यद्भुता तव ॥ ११ ॥
देव विद्याधरः कोऽपि शापान्निर्मोचितस्त्वया ।
इत्यमन्दः प्रवादोऽत्र तत्कोऽप्यसि नमोऽस्तु ते ॥ १२ ॥
अहो गुणेन राजेन्द्र येन केनापि गृह्यसे ।
यदेवं[6] क्लिश्यसे तस्याः फणीन्द्रदुहितुः कृते ॥ १३ ॥

नायकवाक्यम् ।

अथ विद्रुमताम्रोष्ठलुठद्दशनदीधितिः[7] ।
स्मित्वा[8] वसुमतीनाथस्तामिति प्रत्यभाषत ॥ १४ ॥
कदाचित्पाटले कच्चिद्भुजङ्गपतिकन्यका[9] ।
स्मरत्यस्मान् सखीलोकैस्सङ्कथास्वन्तरान्तरा[10] ॥ १५ ॥
किमनङ्गवती वक्ति[11] ब्रूते माल्यवती च किम् ।
अप्यस्त्यहिपुरेऽस्माकं किंवदन्ती कियत्यपि ॥ १६ ॥

---

१ B and I read °मुक्तैव and T °मुक्तैव both for °मुक्तापि　२ B reads त्वल्लीला° and T तल्लील° for तल्लीला°　३ B and K read °धवला° for °शबला°　४ T reads °धाम° for °कान्ता　५ B reads कश्चित् and I कांचित् for कच्चित्　६ B reads यदेक for यदेवं　७ B reads °दीधिते for °दीधितिः　८ B reads स्मृत्वा for स्मित्वा while B and K read प्रचक्रम प्रचक्रमे for इति प्रत्यभाषत　९ T reads फणिराजस्य कन्यका and I फणिराजेन्द्रकन्यका for भुजङ्गपतिकन्यका　१० T reads सखि for सखी°　११ T reads वक्ति ब्रूते माल्यवती पतिम् and अप्यस्ति हि पुरे for वक्ति ब्रूते माल्यवती च किम् and अप्यस्त्यहिपुरे respectively

फणिराजसुताकर्णे[1] कश्चित् प्रापय्य मद्वचः ।
विहितो[2] रत्नचूडेन शुकरूपविपर्ययः ॥ १७ ॥

किमागतासि किं चैवं परिम्लानेव लक्ष्यसे ।
निवेदय द्रुतं यन्मे किमप्याशङ्कते मनः ॥ १८ ॥

लेखार्पणम् ।

इति पृष्टवते तस्मै सान्द्रप्रेमार्द्रचेतसे ।
कन्दर्पदीपनं लेखमर्पयामास पाटला ॥ १९ ॥

समास्तं वाचयेत्युक्त्वा परमारकुलोद्वहः ।
रमाङ्गदस्य चिक्षेप सम्भ्रमोत्तानिते करे ॥ २० ॥

तं हेमकदलीपत्रकस्तूरीलिखिताक्षरम् ।
सोऽवधार्याथ तस्याग्रे व्यक्तवागित्यवाचयत् ॥ २१ ॥

शशिप्रभालेखः ।

स्वस्ति स्थितस्य स्वःसिन्धुतीरे फणिपुरस्थया ।
इदं मध्यमलोकेन्दोर्माल्यवत्या निवेद्यते ॥ २२ ॥

यदेवास्मत्सखी विन्ध्ये त्वया राजन् वियुज्यत ।
तदेवेयं कुरङ्गीव विद्धा हृदि मनोभुवा ॥ २३ ॥

दृष्टिः सर्वत्र राजेन्द्रोः सुधानिष्यन्दिनी तव ।
जाता शशिप्रभायां तु सैव हालाहलच्छटा ॥ २४ ॥

१. B. and K. read °कर्णं for °कर्णे. २ T. and I. read तथापि for विहितो. ३ B. reads दृष्टवते for पृष्टवते. ४. T. reads स्तुष्टवते for पृष्टवते ५ B. reads सार्द्र° for सान्द्र°. ६. B. reads समास्तं and in the margin सं मु स for समास्तं ७ B. reads सोऽवधार्य तस्याग्रे for सोऽवधार्याथ तस्याग्रे. ८. T. reads मणिपुर° for फणिपुर°. ९ T. and I. read यदेव मम° for यदेवास्मत्°, while I reads यदेव for यदेव. १० T. reads °न युज्यत for °त्वयुज्यत ११ B. reads राजेन्द्र for राजेन्द्रोः . १२ B reads शशिप्रभायाः for शशिप्रभायां.

न विनोदयितुं शक्यमेषा केनापि वस्तुना ।
विनेश तत्र कर्पूरशीतया सङ्गमाशया ॥ २५ ॥

त्वद्दर्शनोपकारिण्याः करोत्येकावलीमिव ।
इयं पक्ष्माग्रवर्त्यश्रुप्रपतच्छद्मना दृशः ॥ २६ ॥

वक्ति व्यक्ताश्रुलेखेन निहितेन करोदरे ।
इयमापाण्डुगण्डेन स्मरतापमुखेन्दुना ॥ २७ ॥

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
एष क्व च कुकूलाग्निकर्कशो मदनज्वरः ॥ २८ ॥

नेयं प्रवालशय्यायां नापि प्रालेयवेश्मनि ।
न चेन्दुमणिपर्यङ्के सखी निर्वृतिमेति नः ॥ २९ ॥

निसर्गरक्तमेतस्याः सखीजनमिवाधरम् ।
नयन्ति किमपि म्लानिं मुग्धा निःश्वसितोर्मयः ॥ ३० ॥

अरतित्वमवाप्याम्भःकणिकेव विघूर्णते ।
एषा कमलिनीपत्रशय्यायामायतेक्षणा ॥ ३१ ॥

अस्याः स्मराग्निसन्तप्तं वपुः शशिकलामृदु ।
नीरन्ध्रघर्मसलिलच्छलेनेव विलीयते ॥ ३२ ॥

कृशतामङ्गके गाढमस्याः कुसुमकोमले ।
आरोपयति पुष्पेषुर्मौर्वीमिव शरासने ॥ ३३ ॥

---

१. K. reads शक्या चैषा यस्यापि वार्तया for शक्यमेषा केनापि वस्तुना. २. T. has — —दर्शनीय° for त्वद्दर्शनोप°. ३. T. reads पक्ष्माग्रवर्त्यश्रु° and I. पक्ष्माग्रवल्त्यश्रु° for पक्ष्माग्रवर्त्यश्रु°. ४ T. reads व्यक्ति व्यक्ताश्रुलेखेन विहितेन for वक्ति व्यक्ताश्रुलेखेन निहितेन ५ K. reads सन्वङ्गी for मृद्वङ्गी. ६. T. and I. read मदनानल for मदनज्वर. ७ T. and I. read नवेन्दु° for न चेन्दु°. ८ B. reads °मुग्ध° for °मुग्धा. ९. T. and I. read अरतिस्त्वदवाप्याम्भ° for अरतित्वमवाप्याम्भः and B. विघूर्णिते for विघूर्णते १० K. reads विलीयते and T. विलीयेते for विलीयते, while B. reads स्वर्लीयते for the same. ११ K. reads शरासनम् for शरासने.

धृतया हृदि शलेयं वितीर्णहरिचन्दने ।
निर्वाणमेति भवतः कथया न जलार्द्रया ॥ २४ ॥
आकर्णकृष्टकोदण्डस्त्वां विना निशितैः शरैः ।
भिनत्त्यङ्गमनङ्गोऽस्याः क्षतिश्चेतसि कापि मे ॥ २५ ॥
इयमत्यच्छहृदये दधत्यतिसुवृत्तताम् ।
बाला माणिक्यमुकुरे विमुखी सम्मुखी त्वयि ॥ २६ ॥
एषा शिखेव दीपस्य मुग्धा दग्धदशाश्रया ।
स्मरानिलभरामर्शादितश्चेतश्च वेपते ॥ २७ ॥
इयमिन्दुद्युतिहरं युक्तमत्यायतैर्गुणैः ।
मृणालवलयं हस्ते वहति त्वां च चेतसि ॥ २८ ॥
अनङ्गतापवत्यस्या निकामसरसं हृदि ।
मङ्क्षत्यब्जिनीपत्रं न तु त्वत्प्रेमपल्लवः ॥ २९ ॥
क्रियते वलयेनास्या मणिबन्धे गतागतम् ।
कार्श्यप्रभूमिमासाद्यास्त्वय्यन्तःकरणेन च ॥ ४० ॥
जायते पेशलमपि प्रायो वैरस्त्वन्यथाऽऽपदि ।
प्राप्तो मृणालहारोऽपि यदस्या दाहहेतुताम् ॥ ४१ ॥
निहितास्मासमालीभिर्लवलीगारुपाण्डुनी ।
अस्यास्तनतटे भारः पर वानीरपल्लवाः ॥ ४२ ॥

---

१ T. reads वितीर्ण॰ for वितीर्णं॰ २ I. reads आनिसुरनतान् for भनिसुर॰ तताम् ३ B reads सम्मुख for सम्मुखी ४ I reads इयमान for मुग्धा ५ B reads भरयाहित, but in the margin भरयाहते for भरयायते, while T. reads इन्दुद्युतिहर for इन्दुद्युतिहरं ६ T. reads ॰पल्लवम for ॰पल्लव ७ K. reads भरन्त्यन्यथाप्यथा and I. वस्त्वन्यथापदि for वैरस्त्वन्यथाऽऽपदि ८ T. reads ॰भारहेत for हारोऽपि ९ B reads निहिता भारप, but, in the margin निहि ता भाग॰, while I निहता for निहिता १० T. reads भारं for भार.

न चन्दनेन गोशीरवारिणा न जलार्द्रया ।
नाऽस्याः पुटकिनीपत्रैः शममेति स्मरज्वरः ॥ ४३ ॥

किन्त्वाश्रयं त्वमेतस्या हृदयस्याधिदेवता ।
यतस्त्वन्मयमेवैषा विश्वं विश्वेश पश्यति ॥ ४४ ॥

रत्नचूडोपनीतेन सन्देशेन तवाधुना ।
इयमुच्छ्वसिता किञ्चित् सुधागण्डूषबन्धुना ॥ ४५ ॥

तावदागच्छ वेगेन गृहीत्वा हेमपङ्कजम् ।
अनङ्गविधुता यावदियं श्वसिति नः सखी ॥ ४६ ॥

नायकस्य प्रतिसन्देशः ।

एवमाकर्ण्य ललितं लेखार्थमथ पार्थिवः ।
उद्भिन्नसान्द्रपुलकः पाटलामित्यवोचत ॥ ४७ ॥

यथा सखी वः किमपि प्रपन्ना विधुरां दशाम् ।
तथा त्वमपि मामेवं पाटले किं न पश्यसि? ॥ ४८ ॥

तद्गच्छ तां शशिमुखीमाश्वासयितुमर्हसि ।
वयमेते च हेमाब्जमानेतुं प्रयतामहे ॥ ४९ ॥

तथा कार्यं न वन्ध्यः स्याद्यथा मम मनोरथः ।
वक्तव्या मात्यवैत्येवं मदिरा वल्गुवादिनि ॥ ५० ॥

पाटलाप्रयाणम् ।

आवृत्तिदत्तसन्देशा सा ततः पृथिवीभुजा ।
फणिराजेन्द्रनगरीं त्वरितं पाटला ययौ ॥ ५१ ॥

१ T. reads त्वमेवान्या for त्वमेतस्या. २ B. reads एषा हि for एवैषा. ३. T. reads उच्छ्वसते for उच्छ्वसिता. ४ B. reads °सोधुना for °बन्धुना. ५ K. reads श्वसति for श्वसिति, while T. reads यावदियं श्वसिति नस्सखी for यावदियं श्वसिति नः सखी. ६. T reads अथि° for अथ. ७ B. reads °सार्द्र° for °सान्द्र° and substitutes इत्यमवीत् for इत्यवोचत ८ I. and T. read उपमपि for त्वमपि. ९. K. reads प्रयताम्हे for प्रयतामहे. १०. T. reads एव for एवं and substitutes °वादिनी for °वादिनि. ११ T. mutilates first five letters. १२ B. reads °नगरं for °नगरीं.

प्रस्थानशंसी सहसा तस्याऽथ पृथिवीपतेः ।
प्रलयाम्बुधरध्वानधीरं दध्वान दुन्दुभिः ॥ ५२ ॥

विद्याधरस्त्री पुरुषवर्णनम् ।

नदत्युत्कम्पिमनसा स विद्याधरयोषिताम् ।
निन्ये प्रियपरिष्वङ्गश्लथतामथ दोर्लताः ॥ ५३ ॥

कथञ्चित् प्राणनाथस्य मुखादधरपल्लवम् ।
बाला व्यघटयत् काचिद्दुरसश्च पयोधरौ ॥ ५४ ॥

शनैर्बबन्ध जघने नखाङ्कवति मेखलाम् ।
कापि स्मितमुखी कान्ते तिर्यगर्पितलोचना ॥ ५५ ॥

दृष्टिं दास्यन्ति मे सख्यः खण्डिते दन्तवाससि ।
किमत्र कृत्यमित्यन्या किमपि व्याकुलाऽभवत् ॥ ५६॥

काचित् पर्यङ्कमालोक्य सालक्तकपदाङ्कितम् ।
अन्योन्यार्पितनेत्राभिर्वयस्याभिरहस्यत ॥ ५७ ॥

एका माणिक्यकटकं कराग्रच्युतमाददे ।
हृदयं पुष्पचापेन मध्ये विद्धमिवात्मनः ॥ ५८ ॥

स्वैरमनतिष्ठरिम्बोष्ठं जागरारुणलोचनम् ।
मुखाम्भोजं दृशाऽन्योन्य विलासिभिरपीयत ॥ ५९ ॥

---

१ T and I read अथ जगतीपतेः for ऽथ पृथिवीपतेः. २ T. mutilates four letters before विद्याधर ३ T reads °परिष्वङ्ग श्लथतामथ दोर्लताम् for °परिष्वङ्गश्लथतामथ दोर्लताः ४ B reads उदरात् for उरसः ५ I has शनै बन्ध° for शनैर्बबन्ध. ६ B reads चैताः° for कापि while I. has स्मितमुख for स्मितमुखी ७ T. reads दृष्ट for दृष्टिं ८. K reads व्यथिता for व्याकुला ९ I reads काऽपि for काचित् १० B and K. read °पदाङ्कितम for °पदाङ्कितम ११ T. reads °रि° for °रि° १२ B reads काऽपि for एका १३ B reads स्वैरमघ° T स्वैरमघ° (?) for स्वैरमन°. १४ I and T read मुखाम्बुजं for मुखाम्भोजं

रत्नवतीम्प्रति गमनम् ।

सोऽथ प्रववृते गन्तुं विद्याधरबलान्वितः ।
रथेन रथिनामग्र्यः पुरीं रत्नवतीम्प्रति ॥ ६० ॥

रत्नचूडसमागमः ।

ततः फणिकुमारेण रत्नचूडेन सोऽध्वनि ।
समगंस्त जगत्पूज्यः पूषा दर्श इवेन्दुना ॥ ६१ ॥
स तस्योपायनीचक्रे दिक्चक्रस्खलितध्वनिम् ।
अच्छिन्नदाननिष्यन्दमात्मानमिव वारणम् ॥ ६२ ॥
नृपस्य दीपिकाकृत्यं चक्रिरे तिमिरच्छिदः ।
पुरः प्रसर्पत्तत्सैन्यफणारत्नांशुसञ्चयः ॥ ६३ ॥
कियताप्यथ कालेन मन्दनैः स प्रयाणकैः ।
प्रपेदे कुसुमाश्लेषसुगन्धिपवनं वनम् ॥ ६४ ॥

दूतप्रस्थापनम् ।

असुराधिपतेर्नाम्ना याचितुं हेमपङ्कजम् ।
स्थित्वा स तत्र पुरतो विससर्ज रमाङ्गदम् ॥ ६५ ॥
स च त्रिजगतः सारमादायेव विनिर्मिताम् ।
उत्तुङ्गरत्नप्रासादां प्राप रत्नवतीं पुरीम् ॥ ६६ ॥
रामार्थबद्धकक्षेण सेवितैः प्रभुणा विशन् ।
परिखार्णवमुल्लङ्घ्य स तां लङ्कामिवाङ्गदः ॥ ६७ ॥

---

१ K reads °मग्ग्रस्या for °मग्र्यः पुरीं, while T °मग्र्यस्या for the same २ T. reads °ध्वनिं for °ध्वनिम् ३ T reads °फणि° for °फणा° ४ h reads प्रधानकैः for प्रयाणकैः ५ h reads पवना° for कुसुमा° and °वनं for °पवनं ६ T reads पाम्ना for नाम्ना ७ I reads तस्मिन् स पुरतो and T. तस्मिन् सपुरतो for स तत्र पुरतो ८ T. reads सारात् for सारम ९ h. reads प्राप्तः for प्राप १० B. reads सेविता, but in the margin सेवित, while T substitutes नानार्थ° for रामार्थ° ११ T reads परिपूर्णवमुल्लङ्घ्य स ता for परिखार्णवमुल्लङ्घ्य स ता and K. परिपूर्ण स्वोल्लङ्घ्य स ता for the same

कोऽयं कोऽप्ययमन्योन्यमेवं पल्लवितोक्तिभिः ।
कौतुकस्तिमिताक्षैः स पौरैश्चिरमदृश्यत ॥ ६८ ॥
स चेन्द्रनीलहर्म्येषु ददर्शासुरकन्यकाः ।
लीलास्तमालश्यामेषु मेघेष्विव शतह्रदाः ॥ ६९ ॥
निपीयमानः पौरस्त्रीनेत्रस्फटिकशुक्तिभिः ।
वैरिद्विपघटासिंहः सिंहद्वारमवाप सः ॥ ७० ॥
असुरेन्द्रस्य दोःकण्डुदुःस्थानैकभटाकुलम् ।
वीरः सोऽविशदास्थानमथ द्वाःस्थनिवेदितः ॥ ७१ ॥

असुरेन्द्रवर्णनम् ।

आसीनमञ्जनश्याममुच्चैः स्फटिकविष्टरे ।
हिमाचलेन्द्रशिखरे नवीनमिव नीरदम् ॥ ७२ ॥
केयूरपद्मरागांशुमञ्जरीजटिलावुभौ ।
भुजौ बिभ्राणमुज्ज्वालप्रतापज्वलनाविव ॥ ७३ ॥
उरसा रुद्धगीर्वाणद्विपेन्द्ररदकोटिना ।
हारवल्लीं दधल्लोलां दोलामिव जयश्रियः ॥ ७४ ॥
दधानं दीप्तिपर्यस्ततिमिरौ मणिकुण्डलौ ।
बन्दीकृतौ भयेनोभौ सूर्याचन्द्रमसाविव ॥ ७५ ॥
वीरसेनस्यालङ्कारमङ्कारस्य जीवितम् ।
जगतामङ्कुशं तत्र स वज्राङ्कुशमैक्षत ॥ ७६ ॥

---

१. K. reads °मर्भन्दत for °मदृश्यत. २. T. reads स चैव for स चेन्द्र°. ३ K. reads मदिरा for शतह्रदाः and substitutes लीलातमाल° for लीलास्तमाल°. ४ B reads दुष्कण्डुदुःस्थानमथासितम्, T दोःकण्डुरस्थानैकहटाकुलम् and I दोःकण्डुदुःस्थानैकभटाकुलम् all for दोःकण्डुदुःस्थानैकभटाकुलम्. ५ B reads °सः स्थानमथ द्वाःस्थनिवेदितम् and K. °दुःस्थानमथास्थाननिवेदितम् for °दास्थानमथ द्वाःस्थनिवेदितः. ६ I. reads °विस्तरे for °विष्टरे. ७ B. h. and I. read इव° for इच्चै°. ८ h. भालम for दैत्यम. ९ B. reads °तिमिरे for °तिमिरौ but it seems to be incorrect. १० I. reads भय° for भये°. ११ K. reads वीरसेनस्य वा for वीरसेनस्याल°, while T. अमरारस्य for अङ्कारस्य. १२ T. reads जगतामङ्कुरं for जगतामङ्कुशं and ईक्षत for ऐक्षत

तन्निर्देशितमध्यास्त स हिरण्मयमासनम् ।
नानारत्नांशुशबलं शृङ्गं मेरोरिवार्यमा ॥ ७७ ॥

दूतम्प्रति प्रश्नः ।

कुर्वन् मुखानि स्मेराणि दशनज्योत्स्नया दिशाम् ।
विधाय सत्क्रियामेवमसुरेन्द्रस्तमब्रवीत् ॥ ७८ ॥
अहो किमपि कल्याणमामन्नफलमद्य नः ।
अन्यथा हि गृहं सन्तः किमायान्ति भवद्विधाः ॥७९॥
यदाश्रमे वङ्कुमुनेर्युवयोर्वृत्तमद्भुतम् ।
तत् कर्णातिथितां नीतमेत्य प्रणिधिभिर्मम ॥ ८० ॥
एतया साम्प्रतं ब्रूहि युनो विद्याधरेश्वरम् ।
किमाकाङ्क्षति यैः स्वामी फलं पातालयात्रया ॥८१॥
नियुज्यन्ते नृपेणार्थे नाल्पीयसि भवादृशाः ।
शेषो धृतेर्भुवो ऽन्यत्र व्यापारयति किं फणान् ॥ ८२॥
तदत्र प्रहितो राज्ञा किमर्थमसि कथ्यताम् ।
अर्थिनां व्यर्थतामेति न जातु प्रार्थना मयि ॥ ८३ ॥

रमाङ्गदोक्तिः ।

मार्गैरिवायतैर्वाचां शुचिभिर्दशनांशुभिः ।
सीमन्तिताधरः स्मित्वा तमित्यूचे रमाङ्गदः ॥ ८४ ॥

---

१ B and I. read 'निर्देशित' for 'निर्देशित' and K 'निर्दशित' for the same. २ K reads °धवल, but corrects in the margin °शबल ३ K reads आवृत for दिशाम् ४ K. reads this line as follows —

कुतोऽन्यथा गृहं सन्त समायान्ति भवद्विधा ॥

५ K. reads अद्य for गृहम्. ६ T. reads तकया for एतया and T. and I. read ब्रून युनो for ब्रूहि युनो ७ T reads स्व for य. ८ T. and I read भवादृशा for भवादृशाः, while B. reads भवद्विधा for the same. ९ B reads धृते भुव° for धृतेर्भुवो°. १० B K. and I read फणाम् for फणान्. ११ B reads अपि for असि. १२. I reads व्यर्थितात् for व्यर्थताम् १३ B reads वाच्यं for वाचां while K. मार्गैरिवायतेर्वाचं and in the margin निर्देशैरिव गिरां for मार्गैरिवायतैर्वाचा १४ B. reads स्मृत्वा for स्मित्वा

आसां सुधारसार्द्राणां शुद्धानामसुराधिप ।
गिरां त्वमेको यत् सत्यमिन्दुर्भासामिवाकरः ॥ ८५ ॥
कच्चित्त्वयाऽयमज्ञायि देवः साहसलाञ्छनः ।
जगत्प्रदीपमथवा को न वेत्ति विरोचनम् ॥ ८६ ॥
फणिराजसुतामेष परिणेतुं शशिप्रभाम् ।
पथाऽनेन रथक्षुण्णरत्नशैलेन गच्छति ॥ ८७ ॥
त्वद्वापिहेमपद्मेन शुल्कसंस्था कृता किल ।
अस्याः पित्रेति देवेन तदर्थं प्रहिता वयम् ॥ ८८ ॥
अनेनेच्छसि चेत् कर्तुं सख्यं साहसलक्ष्मणा ।
तत् कार्तस्वरराजीवमानीय स्वयमर्प्यताम् ॥ ८९ ॥
लुम्पन्ति त्वन्मुखच्छायां यावन्नाऽस्य चमूरजः ।
कुरुष्व तावदातिथ्यं हेमाब्जेन महीभुजे ॥ ९० ॥
किमन्यत् 'नार्थिनां मत्तो विघटन्ते मनोरथाः' ।
इति त्वया स्वमेवाशु प्रमाणीक्रियतां वचः ॥ ९१ ॥

यज्ञाङ्कुशवाक्यम् ।

इत्युक्तवति सामर्षभटदृष्टे यशोभटे ।
प्रत्यभाषत मातङ्गं विद्रस्यासुरकुञ्जरः ॥ ९२ ॥

---

१ K. reads त्वमसि यशोऽसि for त्वमेको यत्सत्यम ; while B इन्दुर्भासाम for इन्दुर्भासाम २ B reads प्रथितम् for प्रथितः ३ T. reads °प्रदीपम for °प्रदीपम्. ४. I reads रथ° for रत्न°, while I wants one letter after रत्न°. ५ T reads त्वद्वापिहेमपद्मेन for त्वद्वापिहेमपद्मेन ६ K reads मत्याः for अस्याः. ७ B. and K. read लिम्पन्ति त्वन्मुखच्छायां for लुम्पन्ति त्वन्मुखच्छायां, while T. has लुम्पन्तस्त्वन्मुखच्छायां (?) for the same. ८ K. reads महीभुजः for महीभुजे ९ T. reads विघटन्ते for विघटन्ते १०. B reads °दृष्टं for °दृष्टे. ११ T. and I read °कुञ्जर for °कुञ्जरः

अहो वत विदग्धोऽपि भिद् मुग्ध इव लक्ष्यसे ।
विदुषापि त्वया किञ्चिद्यदुक्तमसमञ्जसम् ॥ ९३ ॥
यूयं क मानुषाः पृथ्वीसङ्कटस्वाम्यदुःस्थिताः? ।
सा च त्रिजगतां भर्तुर्हृच्चिता क शशिप्रभा? ॥ ९४ ॥
तादृङ्मदङ्कमेवात्र स्त्रीरत्नमधिरोहति ।
रमते हि हरस्यैव मौलाविन्दुकलाङ्कुरः ॥ ९५ ॥
यद्यदस्तीह पाताले रत्नं क्वचन किञ्चन ।
भाजनं तस्यतस्याऽङ्गमेकः के यूयमुच्यताम्? ॥ ९६ ॥
सहते नृपतौ नैव हेमतामरसार्पणम् ।
ममैष शक्रविजयक्रीडादुर्ललितो भुजः ॥ ९७ ॥
प्रभुस्तव नयज्ञोऽपि किमनर्थाय केवलम् ।
दीर्घेन्दीवरमालेति विकर्षत्यसितोरगम् ॥ ९८ ॥
इत एव निवर्तध्वं वर्तध्वं वचने मम ।
अवटे किमिति क्षेप्तुमात्मानं यूयमुद्यताः ॥ ९९ ॥
यावदेते न मुञ्चन्ति मर्यादामसुराब्धयः ।
तावद्दूरापसारेण स्वामिनं त्रातुमर्हथ ॥ १०० ॥
नरेन्द्र दुर्जिगीषातस्तं गच्छ विनिवारय ।
स्वादृशाः किमुपेक्षन्ते पतिमुत्पथगामिनम् ॥ १०१ ॥

---

१ T reads तव for वत २ T and I read तदुक्तम for यदुक्तम् ३ T reads °स्त्रास्य° and I °स्वास्य° for °स्वाम्य° ४ T reads °रचिता° for °हृच्चिता°, while B substitutes त्रिजगती° for त्रिजगतां ५ B reads नमते for रमते ६ T reads °मौलाविन्दु° for मौलाविन्दु° ७ T reads अस्ति हि for अस्तीह ८ K reads एव for एकः ९ T reads जहते नृपत नैव for सहते नृपतौ नैव while B substitutes दह मे for सहते १० B reads एष मे for ममैष ११ B T and I read विभु for प्रभु १२ K reads साम्प्रतम् for प्रकटम् १३ T reads नीर्घ-नीवार° for दीर्घेन्दीवर°. १४ B reads निवर्तध्व for वर्तध्व १५ T has अवटमि for अवटे and क्षेप्तु — — मात्मानमुद्यता १६ B T and I read अर्हति for अर्हथ १७ K reads मावद्गच्छ निवारय for तद्गच्छ विनिवारय १८ B T and I read वर्तिनम् for °गामिनम्

अथवाऽस्यास्ति शक्तिश्चेत् किमद्यापि विलम्बते।
आयातु स्वयमादातुमितः काञ्चनपङ्कजम्॥ १०२॥
किमन्यज्ज्ञायतामेष खड्गधारातिथिर्मम।
इत्युक्त्वा कोपतरलं विररामासुरेश्वरः॥ १०३॥

रमाङ्गदस्य प्रतिवचनम्।

धैर्यं संवृतकोपोऽथ स्मयमानो रमाङ्गदः।
तमित्यमुक्तपर्यङ्कः प्रतिवक्तुं प्रचक्रमे॥ १०४॥
निर्वाणवीर्यवतिऽस्मिन् रसातलबिलोदरे।
अभुग्नभुजकण्डूतिरहो किमपि दृश्यसे॥ १०५॥
मन्ये तवैतन्नीरन्ध्रमज्ञातस्वं-परान्तरे।
पातालचिरसंवासैश्चित्ते परिणतं तमः॥ १०६॥
यो हरस्याष्टमीमाहुर्मूर्तिमाहुतिलेहिनीम्।
तत्स्तुतिः मागभृद्भर्ता परमार इति क्षितेः॥ १०७॥
कृतावतारं तद्वंशे वधाय विबुधद्विषाम्।
किमादिदेवं कंसारिं धिङ् मैत्रे इति मन्यसे॥ १०८॥

सँन्दानितकम्।

---

१ K. reads आयातुं स्वयमायातु मत्त for आयातु स्वयमादातुमित. २ K. reads °नति for °तिथि ३ B reads ऽथ for ऽध ४ I and T. read तमित्यमुक्त° and T. substitutes °पर्यङ्क for तमित्यमुक्त° and °पर्यङ्क respectively. ५ B reads निर्वाण° and T निर्वात° both for निर्वाण°, while I °वीरवातेऽस्मिन् and T °वीरवर्तस्मिन् both for °वीर्यवति ऽस्मिन् ६ B T. and I. read °कण्डूति° for °कण्डूति°; while B substitutes अनम° for अभुग्न°. ७ B. reads in the margin दृश्यते K. reads दृश्यसे and T दृश्यसि all for दृश्यसे ८ K. reads अज्ञातस्य परान्तरे for अज्ञातस्व-परान्तरे; while T. substitutes °स्व° for °स्व° ९ K. reads पाताल चिर° for पातालचिर°. १० I. reads चित्ते for चित्त. ११ T reads °लालिहीन for °लिहीन १२ T reads मत्स्तुति for तत्स्तुति. १३ B reads मन्ये for मन्ये १४ B and T. do not insert this

कमलेव मुकुन्दस्य पार्वतीव पिनाकिनः ।
फणिकन्योचिता पत्नी सा महीमीनलक्ष्मणः ॥१०९॥
तां हठेनात्ममात्कर्तुमसुरेन्द्र न शक्ष्यसे ।
न रत्नसूचिमाक्रष्टुमयस्कान्तस्य योग्यता ॥ ११० ॥
पदं पथि निधत्से ऽत्र किमन्यायमलीमसे ।
अपथे चरतां यान्ति दूराद्दूरं विभूतयः ॥ १११ ॥
अनर्पणं महीपाले हेमपङ्केरुहस्य यत् ।
तवापरिघमुसलेदे तदेव द्वारमापदाम् ॥ ११२ ॥
राजेन्द्रदीपके तस्मिन् समराङ्गणवर्तिनि ।
यान्ति भटास्ते न चिराद्दायाम्यन्ति पतङ्गताम् ॥ ११३ ॥
तथा विधेहि न यथा त्वन्दतःपुरयोषिताम् ।
करपल्लवशय्यासु शेरते वदनेन्दवः ॥ ११४ ॥
मधुच्छपतिशोकार्तपौरस्त्रीपरिदेवना ।
इयमुत्सन्नमङ्गीता माभूद्रत्नवती पुरी ॥ ११५ ॥
देवस्यार्पितहेमाब्जस्संदेहि पत पादयोः ।
शिरः पुनन्तु ते कामं पुण्यास्तत्पादपांसवः ॥ ११६ ॥
अथवा सुभटैस्सार्धमुत्तिष्ठ पुरतो भव ।
समं विद्याधरानीकैरयमायाति भूपतिः ॥ ११७ ॥

---

१ K. reads this line as follows —
सैव तस्योचिता पत्नी महीतलाधिपते ॥
२ T. reads शक्ष्यसि and K. शक्यसे　३ I. omits one letter before स्य and substitutes त्व for स्य　४ T. and I read विधत्से for निधत्से　५ T reads °दीपके for °दीपक.　६ K. reads विधेहि भो यथा नैव for यथा विधेहि न यथा　७ I reads °इविना for °देवना, while I. शोकार्तिनारीभौगवेदना for शोकार्तपौरस्त्रीपरिदेवना　८ K reads समेहि for सेहि　९ T. reads पार्थिव for भूपतिः

किमन्यत् सेममेतेन शिरस्तामरसेन ते ।
हैमकोकनदं देवः स्वयमेव ग्रहीष्यति ॥ ११८ ॥

रमाङ्गदागमनम् ।

तमित्युक्त्वा सभामध्यान्निर्जगाम रमाङ्गदः ।
निकटं च रणोत्कस्य जगाम जगतीपतेः ॥ ११९ ॥

अथ वदति शनैः समेत्य तस्मिन्
अमररिपोर्वचनानि तानि तानि ।
असुरपतिविनाशकालरात्रिम्
भृकुटीमुवाह मुखेन मालवेन्द्रः ॥ १२० ॥

गत्वा विद्याधरभटचमूचक्रवाले समं स
क्ष्मापालोऽथ व्यधित परितस्तत्पुरे रत्नवत्याः ।
येन व्यक्तामरजयमहासाहसस्यासुराणां
नाथस्यासीन्नवपरिभवश्यामला वक्त्रलक्ष्मीः ॥ १२१ ॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये कनकारविन्दप्रार्थनो नाम षोडशः सर्गः ॥ १६ ॥

---

१. K. reads स्वयम् for सेमम २ B reads इत्युक्त्वा स for तमित्युक्त्वा ३ I. does not insert this सानि, while T. substitutes समर° for अमर°. ४ I reads 'निनाश° for 'विनाश° ५ T reads आसीभर्तुर्नवपरिभवश्यामला मन्त्र लक्ष्मी and I. आसीद्भर्तुर्नवपरिभवश्यामला मन्त्रलक्ष्मी for नाथस्यासीन्नवपरिभवश्यामला वक्त्रलक्ष्मीः ६. P. reads श्रीसाहसाङ्कचरिते षोडश सर्ग and I परिमलस्य नवसाहसाङ्कचरिते कनकारविन्दप्रार्थनो षोडश. for the whole knolophone, while B इति षोडश. सर्ग for the same

## अथ सप्तदशः सर्गः ।

युद्धवर्णनम् ।

अथाहिविद्याधरराजसैन्यैर्
निपीडितायां पुरि रत्नवत्याम् ।
भटास्सकोपं भुजदर्पभाजो
निर्जग्मुराकृष्टकृपाणपट्टाः ॥ १ ॥

अन्योन्यसङ्घट्टवशेन तेषाम्
उदञ्चिताः काञ्चनकङ्कटेभ्यः ।
युगान्तकालानलवीजशङ्काः
न कस्य चक्रुः शिखिनः स्फुलिङ्गाः ॥ २ ॥

भालेषु भीमा भृकुटीर्विहन्तो
भृङ्गत्विषश्चासिलताः करेषु ।
खुराग्ररुग्णावनिभिस्सरोषं
निरीयुरन्ये चतुरैस्तुरङ्गैः ॥ ३ ॥

न्यभादनीके करिणां च सान्द्र-
सिन्दूरपूरारुणगण्डभित्ति ।

---

१ B reads पुर॰ for पुरि २ K reads ॰धन्वा for ॰पट्टा ३ T reads ॰कङ्कणेभ्य for ॰कङ्कटेभ्य ४ T reads समन्तात् for स्फुलिङ्गाः ५ T reads फलेषु for भालेषु ६ I reads भ्रमद्विप for भृङ्गत्विष ७ I reads ॰ग्लावनिभि for ॰रुग्णावनिभि and I' ॰दूर्द्रावनिभि for ॰रुग्णावनिभि ८ We follow here the marginal reading of B and K while B substitutes न्यर्याश्नीक for न्यभादनीक and I reads नरैरनीक करिणा च सान्द्र सिन्दूरचूर्णारुण॰ and I नरैरनीक करिणा च सान्द्रसिन्दूरदूरारुण॰ for न्यभादनीके करिणां च सान्द्रसिन्दूरपूरारुण॰ the first letter न originally was नि but corrected न

प्रत्यग्रदावानललीढकोटि-
कुलाचलेन्द्रप्रनयोपमेयम् ॥ ४ ॥
पुरो रणोत्सेकभृतां निरुद्धम् .
ओघेन विद्याधरवाहिनीनाम् ।
तत् पुञ्जितं सैन्यममर्त्यशत्रोर्
बभूव मूले मणितोरणस्य ॥ ५ ॥
साटोपमारोपितचापयष्टिर्
निबद्धतूणीरयुगो गजस्थः ।
स निर्जगामाथ महासुरेन्द्रो
वेगादहङ्कार इवात्तदेहः ॥ ६ ॥
युगात्ययाम्भोधरनादधीरस्
तस्योद्गतः सङ्गरतूर्यघोषः ।
वेद्मप्रतिश्रुन्ति नितान्तभीमग्
चकार पातालबिलोदराणि ॥ ७ ॥
सत्पुष्करानञ्जनपुञ्जभासः
पयो जयस्याथ गजानसौध ।
व्यापारयन्तिस्म रयेण वीराख
तत्प्रेरिता वैरिवरूथिनीषु ॥ ८ ॥
परस्परापातिकृपाणनिर्यत्-
ज्वालावलीपल्लवितान्तरिक्षः ।

१ B reads °दावानल्स्त्रशुमान° and I. °दायानलिलीदकोटि° for °दावानलली-ढकोटि.° २ B and K. read पुरा for पुरो ३ T and I read °पिनद्ध° for निबद्ध°. ४ B. reads °दीर्घम् for °धीरस ५ T reads °प्रतिभान्ति for °प्रति-श्रुन्ति, while B substitutes °दीर्घम् for °भीमग् ६ I reads यमस्य for जयस्य, while T. substitutes पयो for पयो ७ T. reads नयेन for रयेण. ८ I reads °विरूधिनीष for °वरूथिनीषु

अभूत् प्रवृत्तः समरो महाहि-
विद्याधरेन्द्रासुरपुङ्गवानाम् ॥ ९ ॥

वीरेषु धावत्सु चरत्स्वमन्दं
गजेषु वल्गत्सु तुरङ्गमेषु ।
अकालकल्पात्ययशङ्कितानि
चकम्पिरे सप्त रसातलानि ॥ १० ॥

प्रकाशयन्तः करणप्रपञ्चं
सुराङ्गनाभिः स्पृहयेक्ष्यमाणाः ।
अत्यद्भुतं नृत्तमिवारभन्त
भटा रणप्राङ्गणरङ्गमध्ये ॥ ११ ॥

उत्प्लुत्य वेगात् पवमानमार्गं
विद्याधरैर्दानजलाविलानि ।
पट्टु व्यपात्यन्त मतङ्गजानां
तीक्ष्णासिपत्रक्रकचैः शिरांसि ॥ १२ ॥

निपत्य कुम्भेषु महागजानां
नीरन्ध्रमुक्तेषु पटु क्वणन्तः ।
भान्तिस्म विद्याधरपुङ्गवानाम्
मुक्ताट्टहासा इव खड्गपट्टाः ॥ १३ ॥

---

१. K. reads अभून्मृधं तत् खलु रोमहारि for अभूत् प्रवृत्त समरो महाहि°; while I. substitutes महाहि for महाहि°. २. T. reads धावत्सु for धावत्सु. ३. K. substitutes भुजेषु and T. भजेषु for गजेषु. ४. K. reads समर° for करण°. ५ B and T. read ईक्षमाणा. for ईक्ष्यमाणा. ६. T. reads न्यस्तम् for नृत्तम्. ७ B reads पवनस्य for पवमान°. ८ K. reads °पत्रै सपत्नै for °पत्रक्रकचै ९. K reads पुन for पट्टु. १० T. reads मुक्तार्द्र° for मुक्ताट्ट°.

आवर्तताम्रुमिलतायमान-
निस्त्रिंशवल्लीवलयाकुलासु ।
प्रपेदिरे पूर्वसुरोज्झितानि
चक्राणि विद्याधरवाहिनीषु ॥ १४ ॥

फणावलीव्यापतितोरगाणाम्
अफल्गुरत्नोपलकर्कशासु ।
कृपाणधारा मसृणीबभूव
महासुराणां न तु सङ्गरेच्छा ॥ १५ ॥

भ्रमान्ति पातालतले प्रसस्नु
क्षितौ बिलद्वारविनिर्गतानि ।
ज्याशब्दहृष्टासुरसिंहनाद-
तुरङ्गहेषा गजबृंहितानि ॥ १६ ॥

प्रधावदश्वीयखुराहतानाम्
अभ्युद्धतो रत्नभुवां परागः ।
गीर्वाणचारण्ठविलङ्कितानि
कृत्स्नानि चक्रे ककुभां मुखानि ॥ १७ ॥

भेदाम्बुपूर्णं परितो गजानां
स्वदानपङ्कोपचितं पदाङ्कं ।

---

१ T reads आवर्तिनाम् for आवर्तताम् २ T reads °पुरोज्झितानि for °सुरोज्झितानि ३ B reads चक्राणि for चक्राणि ४ B reads रत्नाश्मल° for °रत्नोपल° ५ B reads °धारा म्सृणी° for °धारा मसृणी° ६ T reads प्रसुसु for प्रसस्नु ७ T reads समागतानि for विनिर्गतानि ८ B and T read °हृष्ट° for °हृष्ट° ९ B reads प्रधावतामश्व° for प्रधावदश्वीय° १० B reads अभ्युद्धतो for अभ्युद्धतो ११ T reads °हस्त्य° for मदाम्बु° १२ B reads °पङ्कापचितं and T पङ्कापानं for °पङ्कोपचितं

भयङ्कराभूत्तरणार्कबिम्ब-
मण्डलकीर्णेव रणाङ्गणोर्वी ॥ १८ ॥

लूना समूल सुभटासिपत्रे
सहस्रश शोणितशीकरार्द्रा ।
उत्तालवेवस्वनतालवृन्त-
निर्ग्रन्थिर्भिमुक्त करिकर्णताला ॥ १९ ॥

अन्योन्यकृत्तास्त्ररसा भटाना
नवाननपानाम्रनखरिपो ऽग्रे ।
भुजा निपेतु संभ्रमीक्षणेन
समौलिरत्ना इव पन्नगेन्द्रा ॥ २० ॥

अट्टार्दभि-ग्राम-गृपरकभिन्नाद्
असृक्प्रवाहेषु भृश वहत्सु ।
लीलागलद्गैरिकनिर्झराणा
गर्जं जगाहे कुलपर्वतानाम् ॥ २१ ॥

क्ष्माश्रया बभु खड्गश्लथकृत्तानि
सहस्रश शस्त्रभृता शिरासि ।
कालेन मद्धामर्मरोन्तरालाद्
उत्खण्डितानीव सरोरुहाणि ॥ २२ ॥

---

१ K reads रणाङ्गणभू for रणाङ्गणोर्वी २ I omits त in °शीकरार्द्रा and T reads शीकरशोणितार्द्रा for शोणितशीकरार्द्रा ३ T reads उत्ताल° and K °ग्रमालरैरनाल° for उत्ताल° and °वेवस्वनतालवृन्त° respectively ४ B and T read °मात् for °मुक्त ५ B and I read संभ्रमनिरीक्षणेन for संभ्रमीक्षणेन ६ B reads भवि for भसि° ७ T reads क्ष्मामण्डलु and I क्ष्मामण्डलु for क्ष्माश्रया बभु ८ T reads शिरसन्तरालात् for °सरोन्तरालात् while K वैरम for मार्म्मर

कबन्धकण्ठोच्छलदस्रवन्तः
समीपमेत्योपरि कङ्कयूथम् ।
मुहूर्तमिश्रारुणरत्नदण्डम्
अदृश्यत च्छत्रमिवान्तकस्य ॥ २३ ॥

मुक्तैः समूहेन नभश्चराणां
कुम्भेषु चक्रैः करिणां पतद्भिः ।
अस्ताचलप्रायतटप्रपाति-
पतङ्गबिम्बानुकृतिर्वितेने ॥ २४ ॥

पतद्भटं निर्दलिताश्ववारं
निकृत्तमत्तेभकरं क्षणेन ।
व्यधायि विद्याधरसैनिकैस्तत्
सनागवीरैरसुरेन्द्रसैन्यम् ॥ २५ ॥

हंसैरिव स्मेरतटाः समन्तात्
परिच्युतैः कुञ्जरकर्णशङ्खैः ।
वोढुं प्रवृत्ता भवदुत्तरङ्गा
झटित्यगाधा रुधिरस्रवन्ती ॥ २६ ॥

विद्याधर-व्यालभटावलुप्त-
धैर्येषु नश्यत्सु महासुरेषु ।
विन्ध्याङ्कुशो नाम सुरारिसूनुर्
अथो रथेनाजिमहीं विवेश ॥ २७ ॥

---

१ B reads °द्रवन्ते समेतमथोपरि for °द्रवन्त समीपमेत्योपरि and T. has कबन्धकण्ठोच्छलदस्रवद्भिः for कबन्धकण्ठोच्छलदस्रवन्तः. २ B. reads °सितारुण° for °मिश्रारुण° ३. K. reads सितैः for मुक्तैः ४ T and I read °राग° for °नाग° ५ B reads स्मेरभटाः for स्मेरतटाः ६ I. हटित्यगाधा and, T. झगत्यगाधा for झटित्यगाधा. ७ K reads °मुर्वीं for °महीं.

आकर्णकृष्टात् धनुषः पतद्भिर्
बालेन्दुलेखाकृतिभिः पृषत्कैः।
अरातिसैन्ये रणधीरवीरान्
भीरूनिवैको विमुखीचकार ॥ २८ ॥

तद्वीर्यनिर्वासितसौष्टवानां
विद्याधराणामपतन् करेभ्यः।
धाराग्रलग्नद्विपकुम्भमुक्ताः
सताप्यलेशा इव खड्गलेखाः ॥ २९ ॥

क्षणाद्दलन्तिस्म तदा हतानि
बलानि विद्याधर-पन्नगानाम्।
सरित्पयासीव निशाकरांशु-
पूर्णप्रवृद्धार्णवपीडितानि ॥ ३० ॥

न शेकतुस्तस्य गतिं निरोद्धुं
विद्याधरेन्द्रोरगराजपुत्रौ।
रत्नाकरस्येव महेन्द्र-सह्या-
वसह्यवेगं प्रलयोत्थितस्य ॥ ३१ ॥

दोर्दण्डकण्डूतिमथास्य हर्तुम्
उद्धूलत भूपतिना नियुक्तः।

---

१ B and I read रणत स for रणधीर° while T has —
सुरारिसैन्ये रणत स धीरान्
भीरूणि वैरो विमुखीचकार ॥
२ K reads °निर्वापित° for °निर्वासित° ३ B reads धरामलग्न° and T. and I धाराग्रलग्न° both for धाराग्रलग्न° ४ I reads °लेशा for °लेखा ५ B reads पतन्तिस्म for दलन्तिस्म ६ h reads °प्रवृद्धार्णवताडितानि for °प्रवृद्धार्णवपीडितानि ७ K reads °पुत्रा for °पुत्रौ ८ T reads °वेगप्रणयोत्थितस्य for °वेगं प्रलयोत्थितस्य ९ I reads हन्तुम् or हर्तुम, while T भर्तुं for the same

36

जवाज्जगामाजिपथ रथेन
रमाङ्गद कुण्डलितोऽग्रचाप ॥ २२ ॥

तथोपलेभे समरोन्मुखस्य
नादेन वृद्धि शरजन्मनाऽस्य[1] ।
चक्रे पद बाष्पकणोत्करेण
यथा कपोलेष्वसुराङ्गनानाम् ॥ २३ ॥

दूरात् सुपर्वारिसुत रथेन[2]
स रहसा सम्मुखमापतन्तम्[3] ।
रुरोध त बाणपरम्पराभिर्
यशोभट कर्णमिवेन्द्रसूनु ॥ २४ ॥

विश्वाङ्कुश सत्कवचे मुमोच
वक्ष स्थले हैममथास्य त्राणम् ।
तटे ऽञ्जनश्यामतनौ[4] महाद्रेश
शातह्रद ज्योतिरिवाम्बुवाह ॥ २५ ॥

अलक्ष्यसन्धान-विमोक्ष पातान्
यशोभटस्यास्तरुषोऽपि रोपान्[5] ।
मूर्च्छालुठत्सारथिराहताश्वो[6]
रथ शशामासुरनन्दनस्य[7] ॥ २६ ॥

विलासकाञ्चीमथ[8] कालरात्रेर्
उदग्रबुध पद्धतिमन्तकस्य ।

---

१ T reads वृद्धी शरज मनस्य for वृद्धि शरजन्मनाऽस्य   २ T reads °सुतारथेन for °सुत रथेन   ३ h reads सन्° for सम्°   ४ T and I read °सनुर् for °तनौ   ५ T reads कापान् for रोपान्   ६ B reads °सारथिना हताश्वा for °सारथिराहताश्वो   ७ I reads शशासे for शशास   ८ h reads अपि for अथ

मौर्वी पृषत्केण रमाङ्गदस्य
चिच्छेद गीर्वाणरिपोस्तनूजः ॥ ३७ ॥

सन्नाभिबिम्बेन महाजिलक्ष्म्याः
वीरश्रियो विभ्रमनूपुरेण ।
संरम्भे राहोरिव चक्रपाणिः
सोऽप्यस्य चक्रेण शिरश्चकर्त ॥ ३८ ॥

ननर्त विद्याधरसुन्दरीणां
गणो नदन्नूपुरमम्बरे ऽथ ।
मौलौ शरक्षुण्णशिरस्त्ररत्ने
चिक्षेप चास्यामरपुष्पवृष्टिम् ॥ ३९ ॥

दृष्टे शिरस्युत्फलिते स्वसूनोर्
दिङ्मूललीनासु पताकिनीषु ।
वज्राङ्कुशः सम्मुखमापपात
पत्युर्विशामस्तगिरेरिवार्कः ॥ ४० ॥

मदाम्बुवर्षी समरेऽभिधावन्
रेजे गजस्तस्य सहेमकक्ष्यः ।
भिन्नेऽन्तराले पवमाननुन्नस्
तमालनीलस्तडितेव मेघः ॥ ४१ ॥

पत्युः प्रसादस्मितरज्जुकृष्टा
भटा विवृत्यास्य पुरो बभूवुः ।

---

१ K. reads संरब्ध° for सरम्भ. २. B. reads °रात्रे for °रत्ने. ३. B. and K. read उत्फुल्लिते for उत्फलिते. ४. T. reads मदाम्बुवर्षे and I. मदाम्बुवर्षे for मदाम्बुवर्षी. ५ B. and K. read °कक्ष and T. °कक्ष्या both for °कक्ष्य. ६ B. and T. read °स्मृति° for °स्मित.° ७. B. reads पुरे for पुरो.

जवाज्जगामाजिपथं रथेन
रमाङ्गदः कुण्डलितोऽग्रचापः ॥ २२ ॥

तथोपलेभे समरोन्मुखस्य
नादेन वृद्धिः शरजन्मनाऽस्य ।
चक्रे पदं बाष्पकणोत्करेण
यथा कपोलेष्वसुराङ्गनानाम् ॥ २३ ॥

दूरात् सुपर्वारिसुतं रथेन
स रहसा सम्मुखमापतन्तम् ।
रुरोध तं बाणपरम्पराभिर्
यशोभटः कर्णमिवेन्द्रसूनुः ॥ २४ ॥

विश्वाङ्कुशः सत्कवचे मुमोच
वक्षःस्थले हैममथास्य बाणम् ।
तटे ऽञ्जनश्यामतनौ महाद्रेश्
शतह्रदं ज्योतिरिवाम्बुवाहः ॥ २५ ॥

अलक्ष्यसन्धान-विमोक्ष-पातान्
यशोभटस्याचरुपोऽपि रोपान् ।
मुर्च्छालुठत्सारथिराहताश्वो
रथं शशासासुरनन्दनस्य ॥ २६ ॥

विलासकाञ्चीमथ कालरात्रेर्
उदग्ररुधः पद्धतिमन्तकस्य ।

१ T reads वृद्धी शरज मनस्य for वृद्धिः शरजन्मनाऽस्य २ T reads °सुसारथेन for °सुतं रथेन ३ h reads सन्° for सत्° ४ T and I read °तनुर् for °तनौ ५ T reads रोपान् for रोपान् ६ B reads °सारथिना हताश्वो for °सारथिराहताश्वो ७ I reads शशास for शशास ८ h reads अपि for अथ

मौर्वी पृषत्केण रमाङ्गदस्य
चिच्छेद गीर्वाणरिपोस्तनूजः ॥ ३७ ॥

सन्नाभिबिम्बेन महाजिलक्ष्म्याः
वीरश्रियो विभ्रमनूपुरेण ।
संरभ्ये राहोरिव चक्रपाणिः
सोऽप्यस्य चक्रेण शिरश्चकर्त ॥ ३८ ॥

ननर्त विद्याधरसुन्दरीणां
गणो नदन्नूपुरमम्बरे ऽथ ।
मौलौ शरक्षुण्णशिरस्त्ररत्ने
चिक्षेप चास्यामरपुष्पवृष्टिम् ॥ ३९ ॥

दृष्टे शिरस्युत्फलिते स्वसूनोर्
दिङ्मूललोनासु पताकिनीषु ।
वज्राङ्कुशः सम्मुखमापपात
पत्युर्विशामस्तगिरेरिवार्कः ॥ ४० ॥

मदाम्बुवर्षी समरेऽभिधावन्
रेजे गजस्तस्य सहेमकक्ष्यः ।
भिन्नेऽन्तराले पवमानतुन्नस्
तमालनीलस्तडितेव मेघः ॥ ४१ ॥

पत्युः प्रसादस्मितरज्जुकृष्टा
भटा विवृत्यास्य पुरो बभूवुः ।

---

१ K reads सरब्ध° for संरभ्य　२ B reads °रात्रे for °रत्ने　३ B and h read उत्कुलिते for उत्फलिते　४ T reads मदाम्बुवर्ष and I मदाम्बुवर्षं for मदाम्बुवर्षी　५ B and h read °कम्भः and T °कक्ष्या both for °कक्ष्य.
६ B and T read °स्मृति° for °स्मित°　७ B reads पुरे for पुरो

स्वजीवितान्याजिमुखे विहातुम्[१]
अत्युत्सुका भङ्गमलीमसानि ॥ ४२ ॥
आरुह्य चन्द्र द्युमिवाभिराम[२]
नक्षत्रमालाभरण गजेन्द्रम् ।
देवो ऽपि[३] तद्वैरितमो नियन्तुम्[४]
अथ प्रतस्थे नवसाहसाङ्क ॥ ४३ ॥
एकत्र पार्श्वे शशिखण्डनामा
विद्याधरेन्द्रो नृपतेर्बभूव ।
अरातिसेनानलिनीवनैक-
शीतांशुरन्यत्र यशोभटश्च ॥ ४४ ॥
स्फुरत्फण[५]च्छत्रमणिप्रतान-
तेजश्छटाजर्जरितान्धकारः ।
अफल्गुवीर्य[६] फणभृत्कुमारो
ऽप्यग्रेऽभवत्तस्य स रत्नचूडः ॥ ४५ ॥
विधूत[७]निस्त्रिंशतरङ्गितानि
सबाणचक्रीकृतकार्मुकानि ।
हतावशेषाणि पुरोऽस्य चेलुर्[८]
बलानि विद्याधरपन्नगानाम् ॥ ४६ ॥
रक्तासवक्षीबसहस्रताल-
वेतालतालोच्छलिताट्टहासं ।

१ K reads जुहोतुम अत्युत्सुकापाय° for विहातुम् अत्युत्सुकाभङ्ग° while B reads अभ्युत्सुका for अत्युत्सुका २ B and I read अभिरामनक्षत्र° for आभराम नक्षत्र ३ B and K substitute ऽथ for ऽपि ४ B reads निराद्धुम् for नियन्तुम ५ B reads °फणि° for °फण° ६ B reads °वीर for °वीर्य ७ K reads निर्धूत° for विधूत° ८ K reads रेजुर् for चेलुर् ९ T reads °तालावलिप्तार्द्रभाव: for °तालोच्छलिताट्टहास

महाभटानामसुनिर्व्ययपेक्षम्
अन्योन्यमावर्तत सम्परायः ॥ ४७ ॥
चक्राशिरे शस्त्रभृता शिरस्सु
मिथः पतन्त्य करवालवल्ल्य ।
मुक्ता सलील त्रिदशाङ्गनाभिर्
माला इवेन्दीवरपत्रमध्य्यः ॥ ४८ ॥
केषाञ्चिद्दहुः कवचानि शोभां
क्वचित्क्वचिल्लोहितपाटलानि ।
खेलज्जयश्रीचरणारविन्द-
लाक्षारसेनेव नवाङ्कितानि ॥ ४९ ॥
हृदि प्रविष्टैरविशुद्धिमद्भिर्
अभूद्व्यथा काऽपि शरैः परेषाम् ।
दुरात्मना साधुगुणैरिवाग्रे
फलेन सयोगमुपेयिवद्भिः ॥ ५० ॥
परस्परापातजमर्मसीना
धाराच्युत सयातिचूर्णरेणु ।
अवाप तापिच्छरुचिर्जयश्रीः
विलासकालाञ्जनधूलिलीलाम् ॥ ५१ ॥
पर्यायजातैर्भयसैन्यभङ्ग-
करालकोलाहलकातराणाम् ।

१ K and T read साम्पराय for सम्पराय २ K reads °पत्रवीर्यां for °पत्रमध्य ३ K reads °कल्मषानि for °पाटलानि ४ B reads °जलश्री° for °जयश्री° ५ I reads न शाञ्छितानि for नवाङ्कितानि ६ B reads प्रतिष्टै° for प्रविष्टै° and T I and K °रति° for °वित्र° ७ T substitutes यथा for इव ८ B reads °ममीना and in the margin °ममपिा for °मसीना, while I °मसीन for the same ९ I reads °मूल° for °चूर्ण° १० B reads °भव° for °भय°

मुरारि-विद्याधरसुन्दरीणां
दोलेव शोक-प्रमदावभूताम् ॥ ९२ ॥
अथासुरेन्द्रद्विरदेन वेगाद्
अभ्युत्थितेनोद्गलदानधारम् ।
मध्येरणं मध्यमलोकभर्तुर्
जघान मदान्धो जघटे गजेन्द्रैः ॥ ९३ ॥
महेभयोस्तत्र शिखाच्छलेन
प्रतिप्रहारं रदजैः कृशानुः ।
कोशेषु विद्युत्कपिशा मुहूर्तं
व्यधादिवाष्टापदपत्रवल्लीः ॥ ९४ ॥
मुहुः प्रजानामधिपेन गाढम्
आकृष्यमाणस्य शरासनस्य ।
द्विपद्वधारम्भविधौ गभीरः
क्रेङ्कारहुङ्कार इवोच्चचार ॥ ९५ ॥
परिस्फुरत्कुण्डलघृष्टपुङ्खास्
तेन प्रयुक्ताः पृथुविक्रमेण ।
प्रमृष्टकान्ताकुचपत्रलेखे
लेखारिवक्षस्यपतन् पृषत्काः ॥ ९६ ॥
अरातिमुक्तेषु ततस्तनुत्रात्
वह्निस्फुलिङ्गेषु समुल्लसत्सु ।

१ B reads अभ्युद्गतेन for अभ्युत्थितेन २ T reads जघानमत्तोन्धो and I जघानमेरे द्वे both for जघान् मदान्धो ३ K. reads नरेन्द्रः for गजेन्द्र ४ B reads म रदमः° for रदम्न:° ५ T reads गभीर for गभीर ६ B reads केङ्कार-भोङ्कार°, K. and T कोङ्काररङ्कार° and I घेङ्कारघुङ्कार° all for केङ्काररङ्कार.° ७ K. reads °पत्राग् for °पुङ्खास् ८ I reads प्रघृष्ट° for प्रमृष्ट° ९ B reads ततस्तनुत्रात् and I ततेस्तमुत्रात् for ततस्तनुत्रात् १० K reads वह्नि स्फुलिङ्गेषु for वह्निस्फुलिङ्गेषु ११ B reads समुच्छलत्सु for समुल्लसत्सु

मूर्तिर्बभासे वसुधाधिपस्य
निर्यत्प्रतापाग्निकणच्छटेव ॥ ५७ ॥
हिरण्मयी पार्थिवबाणपङ्क्तिर्
अत्युन्नते मूर्ध्नि महासुरस्य ।
रेजे तरामञ्जनपर्वतस्य
लग्नेव तिग्मांशुमयूखमाला ॥ ५८ ॥
अभ्युद्गता भर्तुररातिबाण-
क्षुण्णेन्द्रनीलाङ्गदरेणुराजिः ।
अदृश्यतोद्दामभुजासदस्य
पराक्रमाग्नेरिव धूमलेखा ॥ ५९ ॥
रसाद्गदोऽप्युद्भुकुटिः कृतास्त्रं
वीरं द्विपः पार्श्वगतं निहत्य ।
शरैरलावीज्जयवैजयन्तीं
ज्योत्स्नासितां कीर्तिमिवासुरस्य ॥ ६० ॥
अधःस्थितोड्डामरवैरिपत्ति-
मुक्तेषु निर्लूनशरासनज्यः ।
चिक्षेप चक्राण्यतिदीर्घबाहुः
स कालरात्रेरिव कङ्कणानि ॥ ६१ ॥
उत्प्लुत्य हेलाहतसम्मुखारिर्
विद्याधरेन्द्रोऽप्यसिना चकर्त ।

---

१ T reads मूर्तिर्बभौ सा for मूर्तिर्बभासे २ T. reads वीरद्विपत्° for वीर द्विप while I reads वीरद्विप for the same ३ I. reads शनै for शरै. ४ T. and I read °स्थितेड्डामर° for °स्थितोड्डामर°. ५ K. reads °ज्यम् and I. °ज्या both for °ज्य ६ I reads उत्पत्य for उत्प्लुत्य, while T. reads वेगाहत° for हेलाहत° and I substitutes नि for रि.

जगज्जयस्तम्भमिवोद्धुरस्य[१]
सुरद्विषः काञ्चनकेतुदण्डम् ॥ ६२ ॥
स रत्नचूडोऽपि तथा भुशुण्ड्या[२]
पिपेष वैरिद्विपकुम्भपीठम्[३] ।
सितातपत्रत्वमुदञ्चदापे[४]
यथास्य मुक्ताफलधूलिजालम् ॥ ६३ ॥
तुङ्गं दधत्कर्कशतामभीकः[५]
श्रीसिन्धुराजद्विपकुम्भयुग्मम् ।
पयोधरद्वन्द्वमिवाजिलक्ष्म्याश्
चक्रेऽर्धचन्द्राङ्कितमिन्द्रशत्रुः ॥६४॥
परस्पराघट्टितदन्तकोटि-
भ्रष्टाग्निविश्रममावहन्ति ।
रणाजिरे लोहितरञ्जितानि
विरेजिरे[९] कुञ्जरमौक्तिकानि ॥ ६५ ॥
चिक्षेप पृथ्वीतिलके सुरारिर्
यां यामिषुं कोपकषायिताक्षः ।
तां तां जयाशामिव बाहुशाली
शरैः स तस्यार्धपथे लुलाव ॥ ६६ ॥

---

१ K reads द्युगतस्य, T. द्योद्धुरस्य and I. द्योधुरस्यासुर° for द्योद्धुरस्य and द्योद्धुरस्य सुर° respectively. २ B reads भुसुण्ड्या and T. मुसुण्ड्या both for भुशुण्ड्या; while the reading of I. is illegible. ३. T reads °पीनम् for °पीठम् ४ T. reads °मुदञ्चितापे for °मुदञ्चदापे. ५. T. reads अतीव for अभीकः. ६ T. reads आजिलक्ष्म्या चक्रेऽर्ध° for आजिलक्ष्म्याश्चक्रेऽर्ध°; while T. आजिलक्ष्म्या चक्रे च for the same. ७ B. reads °मावहन्ति for °मावधन्ति, but in the margin °मावहन्ति, while T. reads °मावधन्ती for the same ८. T. reads रणाहितौ for रणाजिरे. ९ B. बभाजिरे, K. विभाजिरे and I विभाजिरे for विरेजिरे. १०. T. and I. read रोष° for कोप°. ११. B. and K. read चकर्त for लुलाव.

तयोस्तथेत्वासपरप्रकर्ष-
प्रत्युक्तकर्णार्जुनयोर्जयश्रीः ।
सुवेल-रत्नाकरयोरुदग्रा
चकार वेलेव गतागतानि ॥ ६७ ॥

पत्युः प्रजानामसुरेश्वरो ऽथ
किरीटमाणिक्यचयं जहार ।
मणिप्रसूनस्तवकप्रतानं
कल्पद्रुमस्येव युगान्तवातः ॥ ६८ ॥

क्रोधादथार्धशशलाञ्छनसोदरेण
बाणेन वासवरिपोर्नवसाहसाङ्कः ।
चिच्छेद राम इव विश्रवसः सुतस्य
पीनांसलोलमणिकुण्डलमुत्तमाङ्गम् ॥ ६९ ॥

आसन् मुखानि ककुभामभितो ऽथ चित्र-
वादित्रनादलहरीमुखरोदराणि ।
देवस्य च त्रिदिवपुष्पमयं पपात
माल्यं शिरस्यसुरवैरिपुरन्ध्रिमुक्तम् ॥ ७० ॥

लक्ष्मीपतेः पृथुभुजद्वयमार्द्रसान्द्र-
ज्याघातलांच्छितमलांच्छितविक्रमस्य ।

---

१ K reads मयुक्त° and T. प्रत्युत्त° for प्रत्युक्त°. २ T. reads सुचेल° for सुवेल° ३ T and I read °मसुरागुगो° for °मसुरेश्वरो° ४ T reads अस्य for अथ° ५ T reads विचित्र° for ऽथ चित्र° ६ B reads मुखरीकृतानि for मुखरोदराणि ७ B reads न्यपतत्न् and I न्यपतत् for पपात, but I in the margin पपात ८ I reads अनरवैरि° for असुरवैरि°. ९ B reads 'सदद्वयम् for °भुजद्वयम्, while K लक्ष्मपतेरथ for लक्ष्मीपते पृथु°

अस्यादरागतजितोर्जितवैरिलक्ष्मी-
पादाब्जयावकनिषक्तमिवाऽऽश्वकाशे ॥ ७१ ॥
तस्याग्रतः कनककुण्डलताड्यमान-
गण्डस्थलीलुलितकुङ्कुमपत्रलेखाः ।
विद्याधरोरगकुरङ्गदृशः प्रमोद-
सान्द्रोच्छलध्वनि जगुर्जयमङ्गलानि ॥ ७२ ॥
स्मित्वा यशोभटकरार्पितचापयष्टिर्
उन्मुक्तरत्नकवचः खचरेश्वरेण ।
उद्भिन्नमौक्तिकनिभश्रमवारिबिंदुर्
देवो ममार्ज मुखमशुकपल्लवेन ॥ ७३ ॥
दैत्याभयोपनतपौरशतार्प्यमाण-
रत्नोपधामथ स रत्नवतीं प्रविश्य ।
तं सयुगस्फुटपरीक्षितशौर्यसारं
राज्ये रिपोः फणिकुमारकमभ्यषिञ्चत् ॥ ७४ ॥
मूर्तं मनोरथमिवोपवनात् सकन्दम्
आदाय तत् कनककोकनदं नरेन्द्रः ।

---

१ T reads अस्यागरागजितोर्मितवैरिलक्ष्मीम् for अस्यादरागतजितोर्जितवैरिलक्ष्मी° omitting one letter २ T. reads °निषिक्त° and I °निष्ठित° for °निषक्त°, while K ऽऽश्वभासे for ऽऽश्वकाशे ३ I reads °गण्डस्थलेषु for °गण्डस्थली° ४ I reads °मन्द्रो° for °सान्द्रो°, while T mutilates four letters at the beginning of this line ५ T mutilates two letters after °कवच ६ B. reads उन्मुक्त° for उद्भिन्न° ७ T. reads —

दैत्याभयोपरतपौरशतार्प्यमाण
रत्नोपधामथनरत्नवतीं– ।
for दैत्याभयोपनतपौरशतार्प्यमाण
रत्नोपधामथ स रत्नवतीं ।,

but one letter is omitted, while I reads °परत° for °पनत° and K °पगत° for the same ८ I reads °रत्नोपधार्यमथ रत्नवतीं for ° रत्नोपधामथ स रत्नवतीं

आदातुमीप्सितमहीन्द्रसुतेति रत्नम्
अभ्युत्सुकस्तदनु भोगवतीं प्रतस्थे ॥ ७८ ॥

देवः साहसिकोऽप्यमन्दमुरजध्वानानुमेयोत्सवाम्[1]
उन्नम्रैः परितो महीं मणिगृहैरुत्तम्भयन्तीमिव ।
[2]तामत्युन्नतरत्नतोरणशिखाप्रेङ्खोल्ल[3]मुक्ताफल-
[4]प्रालम्बोच्छलदच्छकान्तिनिकरस्मेरामवापत्[5] पुरीम् ॥७९॥

इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये हेमकमलहरणो नाम सप्तदशः सर्गः ॥ १७ ॥[6]

---

१ K. and I. read अमन्द्र° for अमन्द°, while B. ऽप सान्द्र° for ऽप्यमन्द°. २ T. mutilates three letters at the beginning of this line. ३ B. reads °प्रेङ्खोद्° for °प्रेङ्खोल्ल°. ४ B reads °प्रारम्भो° for °प्रालम्बो°; while T. °सन्द्° for °च्छलद्°. ५. B in the margin and K. reads अवाप for अवापत्. ६. B. reads इति मृगाङ्कसूनोः परिमलापरनाम्नः कृतौ नवसाहसाङ्कचरिते १७ सर्गः, I. इति परिमलस्य नवसाहसाङ्कचरिते सप्तदशः सर्गः, and T. इति परिमलापरनाम्नि महाकवे कालिदासस्य कृतौ साहसाङ्कचरिते महाकाव्ये हेमकमलहरणं सप्तदश सर्गः.

# अथाष्टादशः सर्गः ।

फणिराजदर्शनम् ।

तं विष्टपत्रितयकण्टकदृष्टसारम्
अभ्यागतं नृपतिमुद्गतगाढहर्षः ।
प्रत्युद्ययावधिपतिः फणिनामनर्घ-
रत्नार्घपाणिरशनैरथ शङ्खपालः ॥ १ ॥

पुरप्रवेशः ।

आदाय सादरफणीश्वरदत्तमर्घ्यम्
अर्घ्यः सतां स बहिरेव निवेश्य सैन्यम् ।
देवोऽविशद्विनयवान् पुरमग्रयायि-
विद्याधराधिप-रमाङ्गद-रत्नचूडः ॥ २ ॥
उत्सृज्य गीतमसमाप्य विलासलास्यम्
अङ्कादपास्य सहसा मणिवल्लकीं च ।
अत्युन्मनास्तदवलोकनकौतुकेन
वातायनान्यधिरुरोह पुरन्ध्रिलोकः ॥ ३ ॥
उत्क्षिप्य वेपथुमता करपल्लवेन
वातायनाग्रमणिमौक्तिकजालकानि ।

---

१ T. reads °दृष्ट° for °दृष्ट°. २ T. omits three letters after रत्नार्घ and reads °पाणीशनैः for °पाणिरशनैः, while K. substitutes शङ्खचूड for शङ्खपाल ३ B. reads हितपत्र for त्रितयक ४ T. reads उत्तिष्ठ for प्रत्युद्य ५ B. reads अत्युन्मन for अत्युन्मना ६ T. and I. read °पल्लवेन for °पल्लवेन ७ T. omits two letters between आ and नि

स्मित्वैकया स विलसन्मकरावचूल-
लीलालवाञ्चितविलोचनमालुलोके ॥ ४ ॥
उद्यद्विवृत्तकरवेणिकया नृपेन्द्रौ
तस्मिन् स्मरोल्लासितजृम्भिकया कयाचित् ।
मुक्ता मुहुर्विबुधसिन्धु-कलिन्दकन्या-
किर्मीरिवानिलहरीसुहृदः कटाक्षाः ॥ ५ ॥
वाचालरत्नवलया सविलासमस्मिन्
निक्षिप्य कापि नवमौक्तिकलाजमुष्टिम् ।
तत्ताडितांसतटपार्थिवदत्तदृष्टिर्
दीर्घेक्षणा किमिव न त्रपया चकार ॥ ६ ॥
वक्षो दधानममराद्रिशिलाविशालम्
आजानुबाहुमवलोक्य नरेन्द्रचन्द्रम् ।
चित्तोपनीतपरिरम्भसुखातिसान्द्रम्
अन्या पयोधरभरे पुलकं बभार ॥ ७ ॥
आलोक्य दर्पणतले प्रतिमागतं तम्
'आप्तो मयैष' इति कापि कृतोत्सवाऽभूत् ।
मुग्धौ गतेऽथ पुरतोऽत्र तदीयबिम्बे
शून्यात्मदर्शविधुरेन्दुमुखी बभूव ॥ ८ ॥

१. T. reads हसित्वैकया for स्मित्वैकया; while B. विकसन्° for विलसन्° and T. विलसद्° for the same. २ B. reads °विलोकित° and T. °विलोकन° for °विलोचन°. ३. K. reads मृणाले for नृपेन्द्रौ and T. नृपेन्द्रो for the same. ४. T. mutilates one letter between मु and व. ५. T. reads विक्षिप्य for निक्षिप्य ६. K. reads °जाल° and T. °जालमुष्टिम् for °लाज° and °लाजमुष्टिम् respectively. ७ K. reads त्रपयांबभूव for त्रपया चकार; while B. नैत्रपया for न त्रपया ८. T. reads वक्षो विदधान° for वक्षो दधान°. ९. B substitutes °सान्द्रम् for °सान्द्रम् १०. T. reads °हरे for °भरे. ११. T. omits three letters after मुग्धा and reads मुग्धोऽत्र omitting one letter. १२ I. reads °बिम्ब° for °बिम्बे.

# अथाष्टादशः सर्गः ।

—

### फणिराजदर्शनम् ।

तं विष्टपत्रितयकण्टकदृष्टसारम्
अभ्यागतं नृपतिमुद्गतगाढहर्षः ।
प्रत्युद्ययावधिपतिः फणिनामनर्घ-
रत्नार्घपाणिरशनैरथ शङ्खपालः ॥ १ ॥

### पुरप्रवेशः ।

आदाय सादरफणीश्वरदत्तमर्घ्यम्
अर्घ्यः सतां स बहिरेव निवेश्य सैन्यम् ।
देवोऽविशद्विनयवान् पुरमग्रयायि-
विद्याधराधिप-रमाङ्गद-रत्नचूडः ॥ २ ॥

उत्सृज्य गीतमसमाप्य विलासलास्यम्
अङ्कादपास्य सहसा मणिवल्लकीं च ।
अत्युन्मनास्तदवलोकनकौतुकेन
वातायनान्यधिरुरोह पुरन्धिलोकः ॥ ३ ॥

उत्क्षिप्य वेपथुमता करपल्लवेन
वातायनाग्रमणिमौक्तिकजालिकानि ।

---

१ T. reads °दृष्ट° for °दृष्ट°. २ T omits three letters after रत्नार्घ and reads °पाणीरशनै for °पाणिरशनै, while K. substitutes शङ्खचूड for शङ्खपाल.
३ D. reads विरयवान् for विनयवान् ४ T. reads उत्सिज्य for उत्सृज्य.
५ B. reads अत्युन्मन for अत्युन्मना ६ T. and I read °पल्लवेन for °पल्लवेन
७ T. omits two letters between आ and नि

स्मिरवैकया स विलसन्मकरावचूल-
लीलालवाञ्चितविलोचनमालुलोके ॥ ४ ॥
उद्यद्विवृत्तकरवेणिकया नृपेन्दौ
तस्मिन् स्मरोल्लसितजृम्भिकया कयाचित् ।
मुक्ता मुहुर्विबुधसिन्धु-कलिन्दकन्या-
किर्मीरवारिलहरीसुहृदः कटाक्षाः ॥ ५ ॥
वाचालरत्नवलया सविलासमस्मिन्
निक्षिप्य कापि नवमौक्तिकलाजमुष्टिम् ।
तत्ताडितांसतटपार्थिवदत्तदृष्टिर्
दीर्घेक्षणा किमिव न त्रपया चकार ॥ ६ ॥
वक्षो दधानममराद्रिशिलाविशालम्
आजानुबाहुमवलोक्य नरेन्द्रचन्द्रम् ।
चित्तोपनीतपरिरम्भसुखातिसान्द्रम्
अन्या पयोधरभरे पुलकं बभार ॥ ७ ॥
आलोक्य दर्पणतले प्रतिमागतं तम्
'आत्तो मयैष' इति कापि कुलोत्सवाऽभूत् ।
मुग्धो गतेऽथ पुरतोऽत्र तदीयबिम्बे
शून्यात्मदर्शविधुरेन्दुमुखी बभूव ॥ ८ ॥

१ T reads छरवैकया for स्मिरवैकया while B विकसन्° for विलसन्° and T विलसद्° for the same २ B reads °विलोकित° and T °विलोकन° for °विलोचन° ३ h reads नृपालै for नृपेन्दौ and T नृपेन्द्रो for the same ४ T. mutilates one letter between मु and द ५ T reads विभिप्य for निक्षिप्य ६ K reads जाल° and T. °लाभुम्म् for °लाज° and °लाजमुष्टिम् respectively ७ h reads चपयाबभूव for त्रपया चकार while B नेत्रपया for न त्रपया ८ T reads वक्षो निदधान° for वक्षो दधान° ९ B substitutes °सार्द्रम् for °सान्द्रम् १० T reads °हरे for °भरे ११ T omits three letters after मुग्धा and reads पुरोऽत्र omitting one letter १२ I reads °बिम्ब° for °बिम्बे

इत्थापतन्मदनबाणपरम्पराणाम्
उन्मीलिताङ्गवलनश्लथमेखलानाम् ।
एणीदृशां विचरति स्म स राजहंसः
पेरोल्लसन्नवरसोर्मिषु मानसेषु ॥ ९ ॥

नायकवर्णनम् ।

सङ्गीतवेश्मनि फणीश्वरचारणानां
गीतिष्वजस्रमिह शुश्रुम यद्यशांसि ।
यातः स एव नयनातिथितामयं नः
पुण्यैरहो बत नृपो नवसाहसाङ्कः ॥ १० ॥

कान्तिच्छटाच्छुरितदिक्तट एष देवो
जीयाज्जगन्ति परमारकुलप्रदीपः ।
उन्मूल्य सम्प्रति सुरारितमः समूलं
येनाहिविश्वतले विहितः प्रकाशः ॥ ११ ॥

हन्तैष पन्नगपतेरतुलप्रतिज्ञा-
प्राग्भारसागरसमुत्तरणैकपोतः ।
उत्पाकमेष च फलं फणिराजकन्या-
चित्ते चिरं कृतपदस्य मनोरथस्य ॥ १२ ॥

---

१. T. has the following reading:—

इत्यापत - - - - - - - - - - -
- - - - - - - - - श्लथमेखलानाम् ।
एणीदृशां वि - - - - - - - - - -
पर्युल्लसन्नवरसोर्मिषुमानसेषु ॥ ९ ॥

२ L. reads पर्युल्लसत्° for पारोल्लसत्°. ३ K. reads °वेश्मसु for °वेश्मनि ४ T. reads °विधतत एव for °दिक्तट एव ५ T. reads °भाग° for °भार° and °समुत्तरणे कपोल for °समुत्तरणैकपोत, while B °सावर° for °सागर°, but in the margin substitutes ग for व. ६ B reads तत्पाक° for उत्पाक°.

एतद्यशोभटकरे कनकाम्बुजं तत्
लीलावतंसमचिरादिरचय्य येन ।
प्रत्युप्तकल्पतरुपल्लवमेष पाणिम्
आदास्यते नृपतिरद्य शशिप्रभायाः ॥ १३ ॥

हाटकेश्वरदर्शनम्।

सान्द्रानुरागपिशुनाः पेरशुः परेषाम्
आकर्णयन्निति से पौरजनस्य वाचः ।
श्रीहाटकेश्वर इति प्रथितस्य तुङ्गम्
अग्रे देदर्श मणिमन्दिरमिन्दुमौलेः ॥ १४ ॥

कुलकम्।

तत्र प्रविश्य सकृतानतिरादिदेवम्
आनर्च कल्पविटपिप्रभवैः प्रसूनैः ।
स्तोतुं कृताञ्जलिपुटः कुटजावदात-
दन्तांशुपल्लवितवागुपचक्रमे च ॥ १५ ॥

हाटकेश्वरस्तुतिः।

अन्तर्जटापिहितसोमसुरापगाय
प्रच्छन्नपञ्चशरशासनलोचनाय ।
तीव्रव्रतग्लपितशैलसुतास्वरूप-
विज्ञाननर्मपटवे पटवे नमस्ते ॥ १६ ॥

१ B. reads कुरुष for परशु. २. T. mutilates one letter before पौरजनस्य. ३. T. mutilates three letters after अग्रे. ४. Except I. all others do not insert this. ५. B. reads 'विटप° for 'विटपि° and K. and T. °प्रभावै for °प्रभवै. ६ T. reads °पल्लव° for °वागुप°. ७ K. reads तीव्रातप° for तीव्रव्रत°, while T. omits one letter after ती ८. K. reads °मर्म° for °नर्म°, while T. °पटली पटवे and I. °पटवे पटवे for °पटवे पटवे.

अत्याद्रानतसुरासुरमौलिरत्न-
नानामरीचिखचिताङ्घ्रिसरोरुहाय।
देहार्धवर्तिगिरिजाविहिताभ्यसूय-
सन्ध्याप्रणामविषमाञ्जलये नमस्ते ॥ १७॥

नीरन्ध्रसिन्धुजलसिक्तकपालमुक्त-
रत्नाङ्कुरस्य करणी विधुरातनोति।
मौलौ सदैव भवतो भवभेदकर्तुर्
निर्दग्धभास्करमहाय नमोऽस्तु तस्मै॥ १८॥

कन्दर्पदर्पशमनाय कृतान्तहर्त्रे
कर्त्रे शुभस्य भुजगाधिपवेष्टनाय।
उर्वी-मरुद्-रवि-निशाकर-वह्नि-तोय-
याज्याम्बरोचवपुषे सुपुंषे नमस्ते ॥ १९॥

---

१ B reads अन्यादरा° for अत्यादरा° २ T reads °रचिताङ्घ्रि° for खचिताङ्घ्रि° ३ T mutilates three letters after °गिरिजा° ४ The following three stanzas do not occur in T and I —

नीरन्ध्रसिन्धुजलसिक्तकपालमुक्त-
रत्नाङ्कुरस्य करणी विधुरातनोति।
मौली सदैव भवतो भवभेदकर्तुर्
निर्दग्धभास्करमहाय नमोऽस्तु तस्मै ॥ १८॥
कन्दर्पदर्पशमनाय कृतान्तहर्त्रे
कर्त्रे शुभस्य भुजगाधिपवेष्टनाय।
उर्वी मरुद्-रवि निशाकर-वह्नि-तोय-
याज्याम्बरोचवपुषे सुपुंषे नमस्ते ॥ १९॥
नीरन्ध्रभूतिधवलाय गजेन्द्रकृत्ति-
सर्वीतदेहकवलीकृतपन्नगाय।
निर्दग्धशानवपुलाय चिपरक्षयैक-
कार्याय कारणगुणाय नमोऽस्तु तुभ्यम् ॥२०॥

५ B has दग्धं - - ग्धभास्कर - - - नमोऽस्तु ६ B in the margin reads तस्याम् for तस्मै ७ B reads सुपुंषे for सुपुंष

नीरन्ध्रभूतिधवलाय गजेन्द्रकृत्ति-
संवीतदेहकवलीकृतपन्नगाय ।
निर्दग्धदानवकुलाय विपक्षयैक-
कार्याय कारणतुलाय नमोऽस्तु तुभ्यम् ॥ २० ॥

ते ने यमेव किल वाङ्मयसागरस्य
पारं गताः प्रणवमात्मविदो वदन्ति ।
तस्मै समाहितमहर्षिविनिग्रहस्य-
हृत्पुण्डरीकविहितस्थितये नमस्ते ॥ २१ ॥

उत्तंसितेन्दुशकलाय कपाल-जूटे-
सङ्घट्टितोर्मिमुखराम्बरनिर्झराय ।
भस्माङ्गरागशुचये विकचोपवीत-
व्यालेन्दुमौलिमणिदीधितये नमस्ते ॥ २२ ॥

नास्त्रं न भस्म न जटा न कपालदाम
नेन्दुर्न सिद्धतटिनी न फणीन्द्रहारः ।
नोक्षा विषं न दयिताऽपि न यत्र रूपम्
अव्यक्तमीश किल तद्धते नमस्ते ॥ २३ ॥

नागराजगृहागमनम् ।

स्तुत्वेत्यवन्तिपतिरिन्दुकलावतंसं
तन्मन्दिरात् सहचरैस्सह निर्जगाम ।

---

१. K reads तस्मै for तुभ्यम्. २ K. reads यमेन for यमेव. ३. B. reads प्रणय° for प्रणव°, while I. reads °मात्र° for °मात्म° and T. °माम° for the same ४. B substitutes °कूट° for °जूट°. ५ B has सङ्घट्टितोर्मिमुखराम्बरनिम्नगाय for सङ्घट्टितोर्मिमुखराम्बरनिर्झराय ६ T. reads °शीधितये for °दीधितये. ७ T has °शाखं न शुक्तिदं° for °दाम नेन्दुर्न सिद्ध°. ८. T. reads अव्यक्तं° for अव्यक्त°, while K. मद्धरमै for मद्धमै

अन्तर्निवेशितहरिन्मणिवेदि वल्गन्[1]
नागाङ्गनं स फणिराजगृहं जगाम ॥ २४ ॥

तत्रावतीर्य रथतः स रमाङ्गदात्त-[2]
पाणिः समुच्छलितमङ्गलतूर्यघोषे[3] ।
उन्निद्रसान्द्रकुसुमप्रकरावकीर्ण-
माणिक्यकुट्टिमतले मसृणं[4] विवेश ॥ २५ ॥

अन्योन्यपल्लवितताद्विजयप्रशंसः
प्रासस्थितिर्विकट[5]काञ्चनविष्टरेषु ।
पद्मच्छदायतदृशा ददृशे ऽथ[6] तस्मिन्
एकत्र तेन मिलितः फणिराजलोकः ॥ २६ ॥

तत्कृत सत्कार ।

तस्मिन् गते नयनगोचरमुद्गतारौ
बद्धाञ्जलिर्झटिति पन्नगराजसंसत् ।
मन्दाकिनीव परितो हरिणावचूड[7]-
न्यालोककुङ्मलितकाञ्चनपङ्कजा[8]ऽभूत् ॥ २७ ॥

न्यञ्च[9]च्छिखाभरणभासुरपद्मराग-
रोचिच्छटाघटित[10]तत्फणरत्नकान्तिः ।

---

१ T and I substitute च for स, while T reads वर्ग° for वल्गन्°. २ I reads रमाङ्गमात्त° for रमाङ्गदात्त°, while T has तत्राव - - रथतः स for तत्रावतीर्य रथतः स ३ T reads °समुच्छलित° and K सदाच्छलित° for समुच्छलित° ४ T reads मनृणा for मसृणं, while B reads in the preceding line °सार्द्र° for °सान्द्र° ५ K reads वितत° for विकट° ६ T substitutes च for ऽथ and mutilates the following :—

एकत्र तेन मिलितः फणिराजलोकः ॥ २६ ॥
तस्मिन् गते नयनगोचरमुद्गतारौ
बद्धाञ्जलिर्झटिति पन्नगराजसंसत् ।

७ B K and I substitute म for ड ८ T reads °कुङ्कुमा for °पङ्कजा ९ T reads भन्यद्° for न्यञ्चत्° १० T substitutes °घुटित° for °घटित° and I °रत्न° for °रत्न°; while T and I read °कान्ति for °कान्ति

राजन्यमौलिमणिचुम्बितपादपीठैः
तस्मै चकार स महाभिजनः प्रणामम् ॥ २८ ॥

प्रत्युप्तरत्नमभितः प्रमदावकीर्णम्
मुक्त्वा चतुष्कमुरगेन्द्रनिदेशितं सः ।
अध्यास्त सादरजरत्फणिकल्पिताशीस्
तन्मध्यवर्तिकनकासनमुन्नतांसः ॥ २९ ॥

वत्सां प्रजानय ममेति शनैर्विसृज्य
नेपथ्यनीलमणिवेश्मनि रत्नचूडम् ।
तत्रासनद्वयमदापयदस्य पार्श्वे
विद्याधराधिप-यशोभटयोः फणीन्द्रः ॥ ३० ॥

स्वर्णासने स्वयमथाच्छफणातपत्र-
रत्नप्रदीपशतजर्जरितान्धकारः ।
लोकत्रयैकतिलकस्य स नातिदूरे
देवस्य दारितमहेन्द्ररिपोर्न्यषीदत् ॥ ३१ ॥

स्थित्वैकतो युवतिमङ्गलगीतिमत्र
शृण्वन् स विन्ध्यतटदृष्टचरैः कुरङ्गः ।
चित्रे[12] निवेशित इवाथ यशोभटेन
स्मित्वा सविस्मयमभ्युच्यत पार्थिवाय ॥ ३२ ॥

---

१. B. reads राजेन्दु° for राजन्य°. २. T. substitutes °पद्मः for °पीठैः. ३. T. reads °माणिकः for °मभितः; while I. and T. read °वितीर्णम् for °वकीर्णम्. ४. K. T. and I. read °मुक्ता° for °मुक्त्वा. ५. T. reads प्रमालय for प्रजानय. ६. T. has नेपथ्यरत्नमणिवेश्मनि – – चूडम् for नेपथ्यनीलमणिवेश्मनि रत्नचूडम्. ७. T. reads वेत्रासन° for नकासन°. ८. T. has °माच्छ for °मथाच्छ° omitting one letter. ९. T. reads °जर्जरिता° for °जर्जरिता°. १०. K. reads °गीत° for °गीति°. ११. K. reads °दृष्टचरं for °दृष्टचरैः. १२. B. reads चित्ते for चित्रे. १३. T. has अमु – स पार्थिवाय.

### शशिप्रभादर्शनम् ।

अत्रान्तरे प्रमदलोलदृशा नृपेण
दूराददर्शि फणिराजसुता ऽभियान्ती ।
तन्वी शिरीषसुमनःसुकुमारमूर्तिर्
देवस्य कार्मुकलतेव मनोभवस्य ॥ २३ ॥

ज्योत्स्नासिताम्बररुचिस्नपिताननेन्दुर्
मात्रा ऽचिरोद्गतयवाङ्कुरकर्णपूरम् ।
मुक्त्वोज्ज्वलं ललितकौतुककङ्कणं च
वेषं विवाहसमयोचितमुद्वहन्ती ॥ २४ ॥

सख्या कयापि लिखितं मदनानलैक-
धूमावलीवलयसंशयमर्पयन्तम् ।
एकान्तकान्तमसितागरुपत्रभङ्गम्
आबिभ्रती लवलिपाण्डुतले कपोले ॥ २५ ॥

आत्मप्रसाधनमनङ्गविलासवेश्म
लीलानिधानमवधिर्नयनोत्सवस्य ।
लावण्यसंवलितमङ्कमुद्वहन्ती
शृङ्गारदुग्धजलधेरधिदेवतेव ॥ २६ ॥

---

१ B. reads प्रयान्ति for ऽभियान्ती २ B. reads शारीरशिरीष for तन्वी-शिरीष° ३. B reads मनुभुवस्य, but in the margin मनोभवस्य. ४ T. mutilates first eight letters in this line. ५ B and K. read °न्दुर° and I. has °नन्दुर° for °ननेन्दुर्, while T. does not insert the Repha. ६. B. reads मात्री, but in the margin मात्रा ७. B. reads मुक्तर्वा,° but in the margin मुक्त्वों° and I. मुक्ता° for मुक्त्वो°, while T मुक्तास्वच्छ for मुक्त्वोज्ज्वलं. ८ T mutilates six letters before [illegible] ९ I. reads °गुरु° for °गरु°. १० T. reads भर्गि° for भङ्गि° and B. °वल्लि° for the same. ११ T. reads 'विधान' for 'निधान' १२ K and I. read 'मुग्ध' and T. 'दुग्ध' both for 'दुग्ध', while T has in the preceding line शृ - - - वल्लित°.

सा पाटलाविधुतचामरमारुतेषत्-
व्यानर्तितालकलता सहिता सखीभिः ।
नातिस्फुटक्वणितनूपुरमाकुलानि
किञ्चिद्विलम्ब्य दधती त्रपया पदानि ॥ २७ ॥
कुलकम् ।

नायिकया नायकदर्शनम् ।

उत्पक्ष्मणा निरुपमोल्लसितप्रमोद-
विस्तारलङ्घितविलाससरोरुहेण ।
सान्द्रस्मरज्वरपिपासितया तयापि
दूरादपायि नयनाञ्जलिना नरेन्द्रः ॥ २८ ॥

माल्यवतीवाक्यम् ।

व्रीडावनम्रमुखपद्ममुपागतायां
तस्यां पितुः कनकविष्टरभागभाजि ।
माल्यादिकल्पितयथोचितसत्क्रियान्ते
तं मालवेन्द्रमिति माल्यवती जगाद ॥ २९ ॥
राजन् महीतलमृगाङ्क विलम्बसे किम्
अद्यापि नूर्णममुना स्वभुजार्जितेन ।

---

१. B. reads °व्यावर्तिता° for °व्यानर्तिता°; while T reads °सुना सहिता सखीभ्य for °लता सहिता सखीभि. २ T. reads °स्फुटन्° for °स्फुट°. ३. T. mutilates three letters after किञ्चि. ४ T. reads दधती for दधती. ५. T. does not insert this. ६. I. reads °वनस and T. °थ वस° for °विलास°. ७ T. reads ऽनयापि for तयापि. ८. T. mutilates last three letters. ९. I. reads °भार° for °भाग°. १०. B substitutes अथ for इति. ११. T. mutilates the following :—

· · · · · · · · · · · विलम्बसे किम्
अद्यापि नूर्णममुना स्वभुजार्जितेन ।
हेमाम्बुजेन विरचय्य धनसमम्वा
पूर्णं · · · · · · · · · · · ॥ ४० ॥

हेमाम्बुजेन विरचय्य वतंसमस्याः
पूर्णप्रतिज्ञमुरगाधिपतिं विधेहि ॥ ४० ॥

कमलावतंसः ।

उक्ते तयेत्यकृत काञ्चनपुष्करं तत्
यावत् स कर्णशिखरे फणिराजपुत्र्याः ।
तावद् विहाय मृगरूपमुदारमूर्तिर्
अग्रे बभूव पुरुषोऽस्य सहेमचेत्रेः ॥ ४१ ॥

पुरुषम्प्रति प्रश्नः ।

कस्त्वं मृगः कथमभूरिति पार्थिवेन
पृष्टः स विस्मयसमुत्सुकमानसेन ।
इत्यब्रवीदुरगनेत्रपरम्पराभिर्
आपीयमानवपुरुक्तिमवन्तिनाथम् ॥ ४२ ॥

प्रतीहारस्य वृत्तान्तः ।

कैलासशैलवसतेर्गिरिशोपरोधात्
द्वारप्रवेशविनिषेधकषायितेन ।
शप्तोऽस्मि कण्वमुनिनाऽयमहं पितुस्ते
श्रीहर्षदेवनृपतेः प्रतिहारपालः ॥ ४३ ॥

---

१. B. and K. read उक्तः for उक्ते. २ K. reads [illegible] for कर्णशिखरे; while T. mutilates after या :—

* * वत् स कर्णशिखरे फणिराजपुत्र्या ।
तावद् विहाय मृगरूपमुदारमूर्तिर्
अग्रे बभूव पुरुषोऽस्य सहेमचेत्र ॥ ४१ ॥

३ B. reads °पात्र and in the margin °चैत्र ४. B reads मृगाकृतिरभूरथ, K. मृगाकृतिरभूरिति and T. मृग कथमभूरिति for मृगः कथमभूरिति ५ B. reads [illegible]° for स विस्मयसमुत्सुक°, while T. substitutes °चेतसेन for °मानसेन. ६ K. and T. read °निरुद्ध° for °रोधात्° ७ T. reads शप्तो मुनिना° and I. [illegible]° for शप्तोऽस्मि कण्व°

रोजा फणीन्द्रदुहितुः कनकारविन्दं
कर्णे करिष्यति यदा नवसाहसाङ्कः ।
त्वं रूपमाप्स्यसि तदेति समादिदेश
शापान्तमेष विहितानुनयो महर्षिः ॥ ४४ ॥

तद् वासवारिविजयोत्थमिदं यशस्ते
गत्वैकपिङ्गलगिरेरवतंसयामि ।
उक्त्वेति दिव्यकुसुमैरवकीर्य मौलौ
पातालमङ्गमनिलस्य पथा जगाम ॥ ४५ ॥

---

१ T. reads रामा for राजा. २ T. and I read ममादिदेश for समादिदेश. ३ T. reads °वास° for °वास° ४ T ends here; it inserts after पातालमङ्ग the following portion —

• • • • • मुखमशुकपल्लवेन ।
वत्ताभयोपरतपौरमतान्यमाण-
रत्नोपशमय स रत्नवतीं प्रविश्य ॥ ४३ ॥

तं सयुगम्फुटपरीक्षितशौर्यमारम्
राजेरिह फणिकुमाग्कमभ्यषिञ्चत् ।
मूर्त मनोरथमिवोपवनात् सकन्दम्
आदाय तत् कनककोकनदं नरेन्द्रम् ॥ ४४ ॥

आशातुमीप्सितमहीन्द्रसुततिरत्न-
मभ्यु – – – – – – – – – ।
– – – द्रुमुरजध्वनानुमेयोत्सवाम्
उत्तमे परितो महर्मणिमहैरुत्तम्भयन्तीमिव ।
– – रत्नतोरणशिलामेह्खलम् – – ।
– – – – – – – रामवापत् पुरीम् ॥

इति श्रीपरिमलकालिदासविरचिते साहसाङ्कचरिते हेमकमलहरणं समदश सर्गः ॥
श्रीव्यंकटेशा नम ॥ श्रीत्यागेशाय मगळं ॥ शुभमस्तु ॥

The above mentioned portion is already inserted at the end of the 17th Canto, and the mistakes in it I have not corrected but given here as they exist in the manuscript.

विवाहविधिः ।

तूर्यस्वनेषु विलसत्सु पठत्स्वमन्दं
बन्दिध्वनीयत फणीन्द्रपुरोधसा च ।
कोणावसंक्तजलपूरितरत्नकुम्भां
वेदिं तयासह स मध्यमलोकपालः ॥ ४६ ॥

अभ्युद्गतार्चिरनलोज्झितधूमराजि-
श्यामीभवत्कनकतामरसावतंसाम् ।
तस्यां यथाविधि स मालवपुष्पकेतुः
कन्यामहेः कुवलयाश्व इवोपयेमे ॥ ४७ ॥

आनीतया झटिति रूपमदृष्टपूर्वम्
अङ्गेन पुष्पशरभङ्गितरङ्गितेन ।
भातिस्म शन्तनुरिव त्रिदिवस्रवन्त्या
पातालचन्द्रकलया स तया समेत्य ॥ ४८ ॥

फणिपतिवाक्यम् ।

निर्गच्छदच्छरुचिनिर्भरमंशुकेन
संच्छादितं किमपि पाणितले दधानः ।
ऊचे तमित्यधिपतिः फणिनामुदञ्चल्-
दन्तांशुशारितरदच्छदरत्नकान्तिः ॥ ४९ ॥

---

१ In I the second letter at the beginning of this line is quite illegible. It may be प, ध, व or य, the Rêfa is already omitted. २. K. reads पठेच्च-मन्दम् for पठत्स्वमन्दम्. ३. B and K. read °अवसिक्त° for °अवसक्त°. ४. I. reads °उत्थित° for °उज्झित°. ५ I. reads °स्यामी° for °श्यामी°. ६. I reads °संतान् for °संताम् ७. K. reads यथाविभव° for यथाविधि. ८ B. reads विवस° for त्रिदिव° ९ K reads नरेन्द्र for समेत्य १० B. and K. read संवेष्टितं for संच्छादितं ११ K. reads °सारित° for °शारित°, while B. and K. °दन्तकान्ति for °रत्नकान्ति

यद्दीयते तव न तादृशमस्ति किञ्चित्
गेहे ममात्र नृपते नवसाहसाङ्क।
कोशप्रतिष्ठितनिधानशतं यतस्त्वाम्
ऐश्वर्यनिर्जितपुरन्दरमामनन्ति ॥ ५० ॥

तत् स्फाटिकं स्वमिव शुद्धमिदं गृहाण
त्वष्टृप्रयत्नघटितं शिवलिङ्गमेकम्।
आकारमर्धवनितावपुषः पुरारेर्
यस्यान्तरे सुकृतिनो हि विलोकयन्ति ॥ ५१ ॥

व्यासः पुरा किल पुराणमुनेः प्रपेदे
तस्मात् किलाङ्गिकविपाणितलं जगाम।
लेभे ततोऽपि भगवान् कपिलो महर्षिम्
सानुग्रहेण मम चेदमदायि तेन ॥ ५२ ॥

शिवलिङ्गार्पणम्।

उक्त्वेत्यनर्घमतिपावनमर्पितं तद्
अन्तःस्फुटैकशिवरूपमहीश्वरेण।
पूर्णेन्दुकान्ति महसा निगृहीतगाङ्गुर्
जग्राह पिण्डितमिव स्वयशो नरेन्द्रः ॥ ५३ ॥

तत्राथ टिक्कतटपरिस्खलितप्रवृत्त-
सीमन्तिनीचटुलनूपुरकाञ्चिनादः।

---

१. K. reads त्वाके मयात्र for गेहे ममात्र. २. K. reads स्वयश एवमिव for स्वमिव शुद्धमिदं. ३. I. reads एव for एकम्. ४. B. reads आकारमिव for आकारमर्ध°. ५. I. has न मतेद° for मम चेद°. ६. B. reads °महेश्वरेण for °महीश्वरेण. ७. I. reads °परिस्फलित° for °परिस्खलित°.

कोऽप्युच्छलत्पटह-वंश-हुडुक-शङ्ख-
वीणा मृदङ्ग-मुरजध्वनिरुत्सवोऽभूत् ॥ ५४ ॥

स्वनगरीम्प्रति प्रस्थानम् ।

वृत्ते वधूमथ विवाहमहोत्सवे ताम्
आदाय निष्प्रतिमपौरुषवैजयन्तीम् ।
अन्वागतादरनिवर्तितपन्नगेन्द्र
पर्युत्सुकः स्वनगरीं स नृपः प्रतस्थे ॥ ५५ ॥

गत्वार्थ दूरमहिविष्टपतः सहेलम्
अश्वः पुराणपुरुषस्य स निर्जगाम ।
शिप्रार्पितेन सहसा पुरतः प्रभाव
सीमन्तिताम्बुपटलेन पथा ससैन्यः ॥ ५६ ॥

तस्याः स्वहस्तमुनिसंहतिकल्पितार्घे
सिन्धोस्तटे स पदमेकपदे चकार ।
शृङ्गे तदा च भगवानरविन्दबन्धुर्
बन्धूकपाटलरुचिः कनकाचलस्य ॥ ५७ ॥

उज्जयिनीप्रवेशः ।

बालातपच्छुरितहर्म्यविटङ्कवर्ति-
पारावतातिमधुरध्वनितच्छलेन ।

---

१ I reads °शङ्खम् हुडुक वंश° for °वंश हुडुक शङ्ख° changed place only २ I reads प्रतिम for °प्रतिम ३ B reads अन्वागितादरविवर्तितपन्नगेन्द्रपर्युत्सुक for अन्वागतादरनिवर्तितपन्नगेन्द्र पर्युत्सुक but in the margin substitutes ग for गि ४ I reads स for स्व° ५ B reads प्रपद for प्रतस्थ, but in the margin प्रतस्थे ६ I reads अति° for अथ ७ B and I read सिप्रा° for शिप्रा° ८ B and K read सहस° for सहेलम्° and I °कल्पितापमिन्धोस्तटे for °कल्पितार्घे सिन्धोस्तटे ९ K reads °सत्पदे for °मकपदे १० K reads °ध्वनिता हितम for °ध्वनितच्छलेन

सम्भावयन् विदधतीमिव पौरमुक्त-
पुष्पाञ्जलिं स पुरमुज्जयिनीं विवेश ॥ ५८ ॥
कान्ता-यशोभटयुतं कृशतामवाप्तास्
ताश्चिन्तयैव सचिवास्तमथ प्रणेमुः ।
काकुत्स्थमोहनमुरारिमिवानुयान्त
सौमित्रिणा जनकराजतनूजया च ॥ ५९ ॥

महाकालेश्वरदर्शनम् ।

आनन्दबाष्पसलिलार्द्रदृशोऽर्धमार्गे
सम्भाष्य तान् स्मितमुखं सह तैर्जगाम ।
विद्याधरोरगकराहततारघण्टा-
टङ्कारहारि भवनं त्रिपुरान्तकस्य ॥ ६० ॥
तस्मिंश्चराचरगुरोर्हरिणाङ्कचूल-
चूडामणेरुपचितिं विधिवद्विधाय ।
साकं फणीन्द्रसुतयाऽम्बरशोधिकम्बु-
तूर्यस्वनोर्मि स च राजकुलं विवेश ॥ ६१ ॥

धारागमनम् ।

तत्रार्णवध्वनिरवोत्सवतूर्यघोषे
स्थित्वा दिनानि कतिचित् स नरेन्द्रचन्द्रः ।
यातिस्म भूषितकुलः कुलराजधानीं
धाराममात्यकथितां मृगयेति वृत्त ॥ ६२ ॥

---

१ B and K read °बाष्पाञ्जलि for °पुष्पाञ्जलि २ K reads कृशिता for कृशता ३ B 'मादनमुरारि' for 'मोहनमुरारि' ४ K reads यान for °यान्त ५ I reads स्वानन्द for आनन्द ६ I reads °दृशाऽथ्य मार्गे for °दृशोऽर्धमार्गे ७ B reads स्मितमुखान् for स्मितमुख while K and I read सहैतैर् for सह तैर् ८ K reads °घण्ट for °घण्टा ९ B and K read °रवोर्मिनि for °स्वनोर्मिनि १० B reads °कथिता for कथिता

उद्घाटितेष्वथ विलोकनकौतुकेन
वातायनेषु परितः पुरसुन्दरीभिः ।
तस्मिंश्चिराद्विशति जीव इवेश्वरे सा
प्रोन्मीलितोरुनयनेव पुरी बभूव ॥ ६३ ॥

शिवलिङ्गप्रतिष्ठा ।

तत् साध्वकारयदथाधिगतप्रतिष्ठं
तत्राच्छरत्नशिवलिङ्गमनर्घशीलः ।
तस्य प्रभावघटितैर्व्यधुरर्हणां च
विद्याधरा विकचकल्पतरुप्रसूनैः ॥ ६४ ॥

अनुयायिप्रस्थानम् ।

कृत्वा यथोचितमकृत्रिममुत्सवान्ते
सत्कारमायतनतिश्लथमौलिरत्नौ ।
दत्ताङ्कपाणिरुभयोः प्रजिघाय सोऽथ
विद्याधराधिप-फणीन्द्रसुतौ स्वदेशम् ॥ ६५ ॥

एकस्तयोरगमदम्बरगामिसैन्य-
सीमन्तिताभ्रपटलः शशिकान्तशैलम् ।
अन्योऽप्यगाधजलमालवजन्हुकन्या-
विश्राणितोरुसरणिर्निजराजधानीम् ॥ ६६ ॥

शशिप्रभासखीगमनम् ।

मा भूः कदापि विमुखी रमणे यदस्य
छन्दानुवृत्तिरतिसंवननं मदस्य ।

१ B. reads उद्घातितेषु for उद्घाटितेषु and I उद्घट्टितेषु for the same. २ B. reads पुरत and T. सुर° for परित and पुर° respectively. ३. I. substitutes यत्र for तत्र, while B. and K. read साध्वकारि यदथा° for साध्वकारयदथा°. ४. I. reads दन्तार्कपाणि° for दत्ताङ्कपाणि° and सोऽप for सोऽथ. ५. B. reads °शकल for °पटल ६ I. reads माभूत् for माभूः ७. I. reads °मतिशसवन वशित्व for °रतिसंवननं मदस्य, while B °मति° for °रति° and यदस्य for मदस्य

[1]उक्त्वेति तामहिसुतामगमन् गृहाणि
गन्धर्व-किन्नर-महोरग-सिद्धकन्याः ॥ ६७ ॥

साम्राज्यलक्ष्मीस्वीकारः ।

नीलच्छत्रावतंसा भुजगपतिसुतापाण्डुगण्डस्थलान्तः-
कस्तूरीपङ्कपत्रव्यतिकरशबलव्यायतांसे सलीलम् ।
देवेनाथ स्वमन्त्रिप्रवरचिरधृता साहसाङ्केन दीर्घे
रो[2]हज्ज्याघातरेखे पुनरपि नि[3]दधे दोष्णि साम्राज्यलक्ष्मीः ॥६८॥

[4]इति श्रीमृगाङ्कदत्तसूनोः परिमलापरनाम्नः पद्मगुप्तस्य कृतौ नवसाहसाङ्कचरिते महाकाव्ये शशिप्रभालाभोनामाऽष्टादशः सर्गः समाप्तः ॥ १८ ॥ श्रीः ॥

---

१. I. reads ता॰ फणिसुतां for तामहिसुतां. २. B. and K. read रोह॰ for रोहज्॰. ३. B reads त्रिदधे for निदधे. ४. I. reads इति परिमलस्य नवसाहसाङ्कचरिते शशिप्रभालाभोऽष्टादश सर्ग.

## अथ ग्रन्थप्रशस्तिः ।

श्रीमत्कविप्रियसुहृच्छलदङ्कराम-
राजेन्दुभक्त्यधिगतप्रतिभाविशेषः ।
एतद्विनिद्रकुमुदद्युति पद्मगुप्तः
श्रीसिन्धुराजनृपतेश्चरितं बबन्ध ॥ १ ॥

लक्ष्मीलतानववसन्त महीतलेन्द्र
विद्याविलासमणिदर्पण सिन्धुराज ।
एतन्मया घटितमुज्ज्वलकान्ति काव्य-
माणिक्यकुण्डलमिह श्रवणे विधेहि ॥ २ ॥

न्यस्तानि यानि मयि सूक्तिसुधाप्रपन्ति
देवेन तेन कतिचित् कविबान्धवेन ।
चन्द्रातपस्नपितमौक्तिकसोदराणां
तेषामिदं विलसितं नवसाहसाङ्के ॥ ३ ॥

यच्चापलं किमपि मन्दधिया मयैवम्
आसूत्रितं नरपते नवसाहसाङ्क ।

---

१ I reads °सुहृच्छन्न° for °सुहृच्छल°; while B substitutes °पद्मनाम° for °दङ्कराम° २ B reads सिन्धुराज for सिन्धुराज° ३ B reads काव्य and K °काव्य for काव्य° ४ B and K read °मिम for °मिह while K substitutes निधेहि for विधेहि ५ B reads देवन for देवेन ६ B reads °साहसाङ्क for °साहसाङ्क ७ I reads य for यत्

आज्ञैव हेतुरिह ते शयनीकृतोग्र-
राजन्यमौलिकुसुमा न कवित्वदर्पः ॥ ४ ॥

---

इति नवसाहसाङ्कचरितं सम्पूर्णम् ।

---

१. B has शयनीकृतराजन्य omitting one letter. २. B. reads विग्रहं. for कवित्वदर्पं . ३. I. has परिपूर्णं नवसाहसाङ्कचरितं कृतिः कवेः परिमलस्य.

# INDEX.

## अ.

क.

ख.

झ.



त.

ध.

न.

भ.

ल.

व

श.

स.

ह.

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr P Peterson and Dr R G Bhandarkar*

| | R. | a | p |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. G Bühler | 0 | 4 | 0 |
| No. II.—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr. F Kielhorn The Sanskrit Text and various Readings, Part I | 0 | 8 | 0 |
| No III—Pañchatantra, Books II and III Edited, with Notes, by Dr G. Bühler | 0 | 4 | 0 |
| No IV.—Pañchatantra, Book I. Edited, with Notes, by Dr F Kielhorn. (In the press) | | | |
| No V—The Raghuvamsa of Kâlidâsa, with the Commentary of Mallinâtha Edited, with Notes, by S P. Pandit, M.A. Part I, Cantos I.—VI (In the press) | | | |
| No. VI—Mâlavikâgnimitra a Sanskrit Play by Kâlidâsa Edited, with Notes, by Shankar P. Pandit, M A. | 2 | 2 | 0 |
| No VII—Nâgojibhatta's Paribhâshendusekhara Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I—XXXVII. | 0 | 8 | 0 |
| No VIII—The Raghuvamsa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S P Pandit, M A Part II., Cantos VII.—XIII. | 0 | 12 | 0 |
| No IX.—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr. F Kielhorn. Part II (Translation and Notes), Paribhâshâs XXXVIII—LXIX. | 0 | 8 | 0 |
| No. X—The Dasakumâracharita of Dandin. Part I. Edited, with Critical and Explanatory Notes, by Dr G Bühler | 0 | 8 | 0 |
| No XI—The Nîtiśataka and Vairâgyaśataka of Bhartrihari, with extracts from two Sanskrit Commentaries Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. (Copies not available) | | | |
| No. XII.—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr. F Kielhorn Part II (Translation and Notes). Paribhâshâs LXX.—CXXII. | 0 | 8 | 0 |
| No XIII—The Raghuvamsa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S P. Pandit, M.A. Part III., Cantos XIV.—XIX. | 0 | 6 | 0 |

| | Rs. | a | p |
|---|---|---|---|
| No XIV.—Vikramâṅkadeva-Charita Life of king Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa Edited, with an Introduction, by Dr. G Bühler (Copies not available.) | | | |
| No XV—Mâlatî Mâdhava a Drama by Bhavabhûti Edited with Critical and Explanatory Notes, by Dr. R G. Bhandarkar, M.A. (Second Edition in the Press) | | | |
| No. XVI.—Vikramorvaśî a Drama by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M A. (Under revision.) | | | |
| No XVII—Hemachandra's Deśînâmamâlâ Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R Pischel and Dr. G Buhler, Part I. Text and Critical Notes by Professor Pischel | 1 | 0 | 0 |
| No. XVIII—Vyâkaraṇa Mahâbhâshya of Patañjali Edited by Dr. F. Kielhorn. Vol. I complete Parts I, II. and III. .. . | 9 | 0 | 0 |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. | 1 | 0 | 0 |
| No XX. Ditto ditto by ditto, Vol. I. Part III | 1 | 0 | 0 |
| No. XXI. Ditto ditto by ditto Vol II. Part I. | 1 | 0 | 0 |
| No XXII Ditto ditto by ditto Vol II Part II. | 1 | 0 | 0 |
| No XXIII Vâsishthadharmaśâstram. Edited, with Notes, by Dr. A A Führer . .. . . ... | 0 | 8 | 0 |
| No. XXIV—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr P Peterson. (Copies not available.) | | | |
| Do Vol. II. Introduction and Notes, by do. .. | 2 | 0 | 0 |
| No. XXV.—Kîrti Kaumudî Edited, with Notes, by Prof A. V. Kathavate. (Copies not available.) | | | |
| No XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali Edited by Dr. F. Kielhorn. Vol. II Part III .. | 1 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhirâja. Edited, with Notes by K. T. Telang (Copies not available) | | | |
| No XXVIII—Vyâkaraṇa-Mahâbhâshya of Patañjali Edited by Dr F. Kielhorn. Vol III Part I .. | 1 | 0 | 0 |
| No XXIX—Do do of do by do Vol. III. Part II | 1 | 0 | 0 |
| No XXX—Ditto do of do by do Vol. III Part III | 1 | 0 | 0 |
| No XXXI—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgâprasâd .. | 2 | 8 | 0 |
| No. XXXII—Tarka Kaumudî of Laugâkshi Bhâskara Edited by Professor M. N. Dvivedi . .. ... | 0 | 12 | 0 |
| No XXXIII—Hitopadeśa of Nârâyaṇa Edited by Dr P Peterson | 0 | 14 | 0 |
| No XXXIV—The Gauḍavaho, by Vâkpati Edited by Shankar P. Pandit ... . | 3 | 0 | 0 |

